यौगन्धरायणः—विजये ! एवमेतत् ।

प्रतीहारी—किं एदं । [ किमेतत् । ]

यौगन्धरायणः—इदम् ।

प्रतीहारी—भणादु भणादु अय्यो भणादु । [भणतु भणत्वार्यो भणतु

यौगन्धरायणः—अथवा नैतच्छक्यं परिहर्तुम्। निवेदयिष्याम्यत्रभवत्यै विजये ! स्थिरीक्रियतामात्मा । ( कर्णे ) एवमिव ।

प्रतीहारी—हा[1] ।

यौगन्धरायणः—विजया खल्वसि ।

प्रतीहारी—एसा गच्छामि मन्दभाआ । [एषा गच्छामि मन्दभागा

यौगन्धरायणः—विजये ! न खलु त्वयात्रभवत्यै गृहीतः स्वामी सहसा निवेदयितव्यम् । स्नेहदुर्बलं मातृहृदयं रक्ष्यम् ।

प्रतीहारी—कहं दाणि णिवेदेमि । [ कथमिदानीं निवेदयामि । ]

यौगन्धरायणः—शृणु ।

पूर्वं तावद् युद्धसम्बद्धदोषाः प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे रूढे शोके कार्यतत्त्वं निवेद्यम् ॥१३॥

प्रतीहारी—घत्तिस्सं । ( निष्क्रान्ता । ) [ ग्रहीष्यामि । ]

यौगन्धरायणः—हंसक ! त्वमिदानीं स्वामिना किं न गतः ।

हंसकः—अय्य ! ववसिदो खु अहं अत्ताणं अणुग्गहिदुं साळङ्काअणेण णिउत्तो—गच्छ; इमं वुत्तन्तं कोसम्बीए णिवेदेहि त्ति। [आर्य व्यवसितः खल्वहमात्मानमनुग्रहीतुं सालङ्कायनेन नियुक्तः—गच्छ वृत्तान्तं कौशाम्ब्यां निवेदयेति । ]

यौगन्धरायणः—किन्नु खल्विदानीं निराशम[2]नुसारं कर्तुकामः, उता स्निग्धपुरुषसन्निकर्षं परिहरति ।

हंसकः—अहइं । [ अथकिम् ]

---

[1] हं. [2] निरागम·.

यौगन्धरायणः—स स्वकं[1] विस्मयादात्मानमाविष्करोति, उत सर्वारम्भसिद्धौ रमणीयं भवति। अथ मामन्तरेण स्वामी न किञ्चिदाह।

हंसकः—अय्य! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तज्जळावगाढाए दिट्ठीए बहुकं सन्दट्ठुकामेण विअ म्हि भट्टिणा उत्तो—गच्छ जोअन्ध—( इत्यर्धोक्ते तिष्ठति। ) [ आर्य! अस्ति, प्रदक्षिणीकुर्वन् भर्तारमन्तर्जलावगाढया दृष्ट्या बहुकं सन्देष्टुकामेनेवास्मि भर्त्रोक्तः—गच्छ यौगन्ध— ]

यौगन्धरायणः—स्वैरमभिधीयतां, स्वामिवाक्यमेतत्।

हंसकः—जोअन्धराअणं पेक्खेहि त्ति। [ यौगन्धरायणं प्रेक्षस्वेति। ]

यौगन्धरायणः—मा तावत्। सर्वसचिवमण्डलमतिक्रम्यैको यौगन्धरायणो द्रष्टव्य इत्याह।

हंसकः—अहइं। [ अथकिम् ]

यौगन्धरायणः—तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी।

हंसकः—बाहं। [ बाढम्। ]

यौगन्धरायणः—पुरुषान्तरितं मां द्रक्ष्यति स्वामी,

रिपुनृपनगरे वा बन्धने वा वने वा
समुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम्।
जितमिति कृतबुद्धिं वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम्॥ १४॥

( नेपथ्ये )

हा हा भट्टा! [ हा हा भर्तः! ]

यौगन्धरायणः—

---

1 स्वयं.

एष शोकप्रतीकारो यथाशक्ति निवेद्यते ।
एतत् स्त्रीभिरसामर्थ्यं मन्त्रिणामनुवर्ण्यते ॥ १५ ॥

( प्रविश्य )

प्रतीहारी–अय्य ! भट्टिमादा । [ आर्य ! भर्तृमाता । ]

यौगन्धरायणः–किं किम् ।

प्रतीहारी–आह ।

यौगन्धरायणः–किमिति ।

प्रतीहारी–एवंविहस्स सुहिज्जणेण परिगहीदस्स वच्छराअस्स वुत्तन्तो । किं सक्कं कत्तुं अन्तरेण विहाणं । ता सम्माणिअ सुहि समत्थिअदु । जो खु दाणि सङ्कटेसु वा ण विसीददि, विसम वा ण पय्यवचिट्ठदि, वञ्चिदो वा ण णिव्वेदं गच्छदि, पडिघ वा पाणा ण समुज्झदि, सो खु बुद्धिमन्तो पुच्छिज्जइ पढमं एव वच्छस्स वअस्सो पच्चा अमच्चो आणेदु मे पुत्तअं पुत्तओ [ एवंविधस्य सुहृज्जनेन परिगृहीतस्य वत्सराजस्यायं वृत्तान्तः । किं कर्तुमन्तरेण विधानम् । तत् सम्मान्य सुहृज्जनं समर्थ्यताम् । यः खलु दानीं सङ्कटेषु वा न विषीदति, विषमगतो वा न पर्यवतिष्ठते, व वा न निर्वेदं गच्छति, प्रतिघातेषु वा प्राणान् न समुज्झति, स बुद्धिमान् पृच्छयते प्रथममेव मे वत्सस्य वयस्यः पश्चादमात्य आनय पुत्रकं पुत्रक इति । ]

यौगन्धरायणः–अहोतुखल्वत्रभवत्या राजवंशाश्रितं धीरवाक्यम् हितम् । अत्रभवत्याः सम्भावनां पूजयामि । विजये ! आपस्ता

प्रतीहारी–अय्य ! तह । ( निष्क्रम्य प्रविश्य ) इमा आवो । [ अ तथा । इमा आपः । ]

यौगन्धरायणः–आनय । ( आचम्य ) विजये ! किमाह तत्रभव

प्रतीहारी–आणेदु मे पुत्तअं पुत्तओ त्ति । [ आनयतु मे पुत्रकं इति । ]

यौगन्धरायणः–हंसक ! किमाह स्वामी ।

हंसकः–जोअन्धराअणं पेक्खेहि त्ति । [ यौगन्धरायणं प्रेक्षस्वेति । ]

यौगन्धरायणः–विजये !

> [1]यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।
> मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १६ ॥

प्रतीहारी–अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

( प्रविश्य )

निर्मुण्डकः–अय्य ! अच्छरिअं णिव्वुत्तं । भट्टिणो सन्तिणिमित्तं उवट्ठिअभोअणं बम्हणजणं पेक्खिअ केण वि किळ उम्मत्तवेसधारिणा ब्रम्हणेण उच्चं[2] हसिअ उत्तं—सेरं सेरं अण्हन्तु भवन्तो, अब्भुदअं खु इमस्स राअउळस्स भविस्सदि त्ति । तदो वअणसमआळं एव्व अदंसणं गदो । [ आर्य ! आश्चर्यं निर्वृत्तम् । भर्तुः शान्तिनिमित्तमुपस्थितभोजनं ब्राह्मणजनं प्रेक्ष्य केनापि किलोन्मत्तवेषधारिणा ब्राह्मणेनोच्चं हसित्वोक्तं–स्वैरं स्वैरमश्नन्तु भवन्तः, अभ्युदयः खल्वस्य राजकुलस्य भविष्यतीति । ततो वचनसमकालमेवादर्शनं गतः । ]

यौगन्धरायणः–अपि सत्यम् ।

( ततः प्रविशति ब्राह्मणः । )

ब्राह्मणः–इमेऽत्रभवता परिगृहीता आत्मप्रयोजनोत्सृष्टाः परिच्छदविशेषाः । एभिः प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः ।

यौगन्धरायणः–एवं, द्वैपायनः प्राप्तः ।

ब्राह्मणः–बाढम् ।

यौगन्धरायणः–तेन हि पश्यामस्तावत् ।

ब्राह्मणः–पश्यतु भवान् ।

---

१ यदि शत्रुबलग्रस्तं राहुणा चन्द्रमिव । which should be यदि शत्रुबलग्रस्तं तं चन्द्रमिव राहुणा ॥ २ उवहसिअ.

यौगन्धरायणः—कथमन्यद् रूपमिव मे संवृत्तम् । हन्त गतोऽस्मि स्वामिसन्निकर्षमेव । इदानीं ममोपदेशार्थमिवोत्सृष्ट

उन्मत्तसदृशो वेषो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

( प्रविश्य )

प्रतीहारी—अय्य ! भट्टिमादा आह—इच्छामि मे पुत्तअं पेक्खिदुं त्ति । [ आर्य ! भर्तृमाताह—इच्छामि मे पुत्रकं प्रेक्षितुमिति । ]

यौगन्धरायणः—अयमयमागच्छामि । आर्य ! शान्तिगृहे प्रतीक्षस्व ।

ब्राह्मणः—बाढम् । ( निष्क्रान्तः । )

यौगन्धरायणः—हंसक ! विश्रम्यतामिदानीम् ।

हंसकः—अय्य ! तह । ( निष्क्रान्तः । ) [ आर्य ! तथा । ]

यौगन्धरायणः—विजये ! गच्छाग्रतः ।

प्रतीहारी—अय्य ! तह । [ आर्य ! तथा । ]

यौगन्धरायणः—भोः !

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १८ ॥

( निष्क्रान्ताः । )

प्रथमोऽङ्कः ।

---

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति काञ्चुकीयः । )

काञ्चुकीयः—आभीरक! आभीरक! गच्छ महासेनवचनात् प्रतीहाररक्षकं ब्रूहि—एष काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तः । [1]अस्य सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव निवेश्यताम् । यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति । भोः! एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न खलु महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्तुखल्विदम् । अथवा दैवमत्र कन्याप्रदानेऽधिकृतम् । कुतः,

व्यक्तं न तावत् समुपैति तस्य दूतो वधूत्वे विहिता हि यस्य ।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो न वेत्ति जानन्नपि तत्प्रतीक्षः ॥ १ ॥

अये संलीयमानान्तःपुरचरः सनाथीभवत्ययं देशः । अये अयं महासेनः, य एषः,

दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
पीताङ्गदैः परिगतैः परिणीवितांसः[2] ।
अस्माद् घनात् कनकतालवनैकदेशा-
न्निर्धावितः[3] शरवणादिव कार्त्तिकेयः ॥ २ ॥

( निष्क्रान्तः । )

## विष्कम्भकः ।

( ततः प्रविशति राजा सपरिवारः । )

राजा—

मम हयखुरभिन्नं मार्गरेणुं नरेन्द्रा
मकुटतटविलग्नं भृत्यभूता वहन्ति ।

१ अन्यसामान्यदूत०. २ परिणीहितांसः. ३ निर्धारितः.

न च मम परितोषो यन्न मां वत्सराजः
प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ ३ ॥

बादरायण !

( प्रविश्य ) काञ्चुकीयः—जयतु महासेनः ।

राजा—निवेशितो जैवन्तिः ।

काञ्चुकीयः—निवेशितोऽनुरूपतश्च सत्कृतः ।

राजा—न्याय्यं कृतं राजवंश्यगुणाभिलाषिणा । समागतानां[1] पूजया प्रतिग्रहः । अथ सर्वोऽपि कन्याप्रदानं प्रति पृष्टश्चेत् प न्देन तिष्ठति । ( काञ्चुकीयमवलोक्य ) बादरायण ! वक्तुका[2] त्वां लक्षये ।

काञ्चुकीयः—न खलु किञ्चित् । कन्याप्रदानं प्रति समुत्पन्नोऽभि

राजा—अलमलं परिहृत्य । सर्वसाधारणो ह्येष विधिः । अभिधीय

काञ्चुकीयः—महासेन ! एषा मे विवक्षा—एवं नामाहन्यहनि गो कूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । कि ल्विदमिति ।

राजा—बादरायण ! एवमेतत् । अतिलोभाद् वरगुणानामति वासवदत्तायां न शक्नोमि निश्चयं गन्तुम् ।

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ ४ ॥

काञ्चुकीयः—महासेनं वर्जयित्वा न हीदानीमेते गुणाः क्वचिद दृश्यन्ते ।

१ समासन्नप्रीतिकारणागतानाम्. २ वक्तुकाम इव.

राजा—अतः खलु चिन्त्यते ।

कन्याया वरसम्पत्तिः पितुः ( प्रायः ) प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ ५ ॥

दुहितुः प्रदानकाले दुःखशीला हि मातरः । तस्माद् देवी तावदाहूयताम् ।

काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )

राजा—भोः ! काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं गतं शालङ्कायनं प्रति गता मे बुद्धिः । किन्तुखल्वद्यापि वृत्तान्तं न प्रेषयति स ब्राह्मणः ।

कामं या तस्य सा लीला तत्रैवानुगतं मनः ।
ये त्वस्य सचिवाः सर्वे यत्नमास्थाय ते स्थिताः ॥ ६ ॥

( ततः प्रविशति देवी सपरिवारा । )

देवी—जेदु महासेणो । [ जयतु महासेनः । ]

राजा—आस्यताम् ।

देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यन्महासेन आज्ञापयति । ]

राजा—वासवदत्ता क्व ।

देवी—उत्तराए वेदाळिआए सआसे वीणं सिक्खिदुं णारदीअं गआ आसी । [ उत्तराया वैतालिक्याः सकाशे वीणां शिक्षितुं नारदीयां गतासीत् । ]

राजा—कथमुत्पन्नोऽस्या गान्धर्वेऽभिलाषः ।

देवी—केण वि किळ उग्घादेण कञ्चणमाळं वीणाजोग्गं करअन्तिं पेक्खिअ सिक्खिदुकामा आसी । [ केनापि किलोद्घातेन काञ्चनमालां वीणायोग्यां कुर्वतीं प्रेक्ष्य शिक्षितुकामासीत् । ]

राजा—सदृशं बाल्यस्य ।

देवी–महासेणं वि किं वि विण्णविदुकामा म्हि । [ महासे किमपि विज्ञापयितुकामास्मि । ]

राजा–किमिति ।

देवी–आअय्यं इच्छामि त्ति । [ आचार्यमिच्छामीति । ]

राजा–उपस्थितविवाहकालायाः किमिदानीमाचार्येण । पति शिक्षयिष्यति ।

देवी–हं एसो दाणि मे दारिआए काळो । [ हम् एषं इदा दारिकायाः कालः । ]

राजा–भोः ! नित्यं प्रदीयतामित्यस्मानुपरुध्य किमिदानीं सन्त

देवी–अभिप्पेदं मे पदाणं । विओओ मं सन्तावेदि । अह उण दिण्णा । [ अभिप्रेतं मे प्रदानम् । वियोगो मां सन्तापयति । कस्मै पुनर्दत्ता । ]

राजा–न तावन्निश्चयो गम्यते ।

देवी–इदाणिं पि ण दाव । [ इदानीमपि न तावत् । ]

राजा–

अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता । एष चा काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोभयति चारित्रेण । (आत्मगतम्) न किञ्चिदाह । अश्रुपूर्वा व्याकुला निश्चयं गमिष्यति । भवतु, निवेदयाम्यस्यै । (प्रकाशम्) श्रूयन्तेऽ त्सम्बन्धप्रयोजनायागता राजानः ।

देवी–किं दाणि वित्थरेण । जहिं दइअ ण सन्तप्पामो, तहिं दीअ [ किमिदानीं विस्तरेण । यत्र दत्त्वा न सन्तप्यामहे, तत्र दीयताम्

राजा–अहो महान् खलु लीलाभिहितो दुःखविस्तर इदानीं पश्च

पालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्चयं गच्छतु । श्रूयताम्,

अस्मत्सम्बद्धो मागधः काशिराजो वाङ्गः सौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मां कस्ते वैतेषां पात्रतां याति राजा ॥८॥

( प्रविश्य )

काञ्चुकीयः—वत्सराजः !

राजा—किं वत्सराजः ।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

राजा—प्रियवचनमिति ।

देवी—( उत्थाय ) जेदु महासेणो । [ जयतु महासेनः । ]

राजा—( सहर्षम् ) प्रियवचनपरिहार्या हि देवी । आस्यताम् ।

देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यद् महासेन आज्ञापयति । ]

राजा—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

काञ्चुकीयः—( उत्थाय ) तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—( सहर्षम् ) किमाह भवान् ।

काञ्चुकीयः—तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—उदयनः ।

काञ्चुकीयः—अथ किम् ।

राजा—शतानीकस्य पुत्रः ।

काञ्चुकीयः—दृढम् ।

राजा—सहस्रानीकस्य नप्ता ।

काञ्चुकीयः—स एव ।

राजा—कौशाम्बीशः ।

काञ्चुकीयः—सुव्यक्तम् ।

राजा—गान्धर्वविक्तकः ।

काञ्चुकीयः—एवं ब्रुवन्ति ।

राजा—वत्सराजो ननु ।

काञ्चुकीयः—अथ किं, वत्सराजः ।

राजा—अथ किमुपरतो यौगन्धरायणः ।

काञ्चुकीयः—न खलु, कौशाम्ब्यां किल ।

राजा—यद्येवं, न गृहीतो वत्सराजः ।

काञ्चुकीयः—श्रद्धत्तां महासेनः ।

राजा—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च नः स्वनन्ति ॥ ९ ॥

काञ्चुकीयः—प्रसीदतु महासेनः । वृद्धोऽस्मि ब्राह्मणः खल्वहम् महासेनसमीपेऽनृतमभिहितपूर्वम् ।

राजा—आ अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषित

काञ्चुकीयः—न पुरुषः । जवातिशययुक्तेन खररथेन वत्सराजम कृत्वा स्वयमेवामात्यः प्राप्तः ।

राजा—एवं प्राप्तः । हन्त भोः ! अद्य विमुक्तसन्नाहा सुखं विश्र त्वक्षौहिणी । अद्यप्रभृति प्रच्छन्नकृतदूतसम्प्रेषणा अशङ्कि स्थास्यन्ति राजानः । एष समासः—अद्यास्मि महासेनः ।

देवी—किं अमच्चेण आणीदो । [ किममात्येनानीतः । ]

राजा—अथ किम् ।

देवी—एदण्णिमित्तं कस्स वि ण दिस्सामो वासवदत्तं । [ एतन्नि कस्मा अपि न दित्सामो वासवदत्ताम् । ]

राजा—युद्धावजितशत्रुः खल्वेष मम । बादरायण ! शालङ्कायनः क्व ।

काञ्चुकीयः—[1]आहितो भद्रद्वारे ।

राजा—गच्छ । भरतरोहकं ब्रूहि—कुमारविधिविशिष्टेन सत्कारेण वत्सराजमग्रतः कृत्वा प्रवेश्यताममात्य इति ।

काञ्चुकीयः—यदाज्ञापयति महासेनः ।

राजा—एहि तावत् ।

काञ्चुकीयः—अयमस्मि ।

राजा—वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः ।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः ।
सिंहमन्तर्गतामर्षं यज्ञार्थमिव संयतम् ॥ १० ॥

काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )

देवी—बहूणि अब्भुदआणि इमस्सिं राअउळे अणुभूदाणि । ण खु अहं ईदिसं पीदिजोग्गं महासेणस्स सुमरामि । [बहवोऽभ्युदया अस्मिन् राजकुलेऽनुभूताः । न खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि । ]

राजा—अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, यथा गृहीतो वत्सराज इति ।

देवी—वच्छराओ णं । [ वत्सराजो ननु । ]

राजा—अथ किम् ।

देवी—बहूणि सम्बन्धप्पओअणागदाणि राअउळाणि सुदाणि । एदिणा ण पेसिदपुरुवो पुरुसो । [ बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि । एतेन न प्रेषितपूर्वः पुरुषः । ]

राजा—देवि ! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलषति ।

देवी—ण गणेदि । किं बाळो अपण्डिदो वा । [न गणयति । किं बालः अपण्डितो वा । ]

१ आस्थितो द्वारे.

राजा—बालः, न त्वपण्डितः ।

देवी—किण्णुहु एणं उस्सेअअदि । [ किन्नुखल्वेनमुत्सेकयति ।

राजा—उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवाय¹ भारतो वंशः । दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः । विभ्रम वयस्सहजं रूपम् । विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानु

देवी—अभिळसणीआ वरगुणा । कस्स वामदाए दोसो सं [ अभिलषणीया वरगुणाः । कस्य वामतया दोषः संवृत्तः । ]

राजा—देवि ! किमिदानीमस्थाने विस्मितासि । पश्य,

अग्निः कक्ष इवोत्सृष्टो दहन् कात्स्न्र्येन मेदिनीम् ।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

( प्रविश्य )

काञ्चुकीयः—जयतु महासेनः । यथाज्ञाप्रयुक्तसत्कारं प्रविष्टः शा यनः । स तु विज्ञापयति—इदं भरतकुलोपभुक्तं वत्सराजकुले घोषवती नाम वीणारत्नम् । महासेनः प्रतिग्राहयितव्य इ ( वीणां दर्शयति । )

राजा—प्रतिगृहीतं जयमङ्गलम् । ( वीणां गृहीत्वा ) इयं सा घो नाम । यैषा,

श्रुतिसुखमधुरा स्वभावरक्ता करजमुखोल्लिखिताग्रघृष्टतन्त्री ।
ऋषिवचनगतेव मन्त्रविद्या गजहृदयानि बलाद् वशीकरोति ॥

भोः ! समरावजितानां रत्नानामिष्टसम्भोगः प्रीतिमुत्पादयति

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः सुतः ।
गान्धर्वद्वेषी व्यायामशाली चाप्यनुपालकः ॥ १३ ॥

कनुखल्वियं सुन्यस्ता भवेत् । देवि ! वासवदत्ता वीणामुप ननु ।

---

१ प्रतिष्ठितः. देवान्वयसमवायप्रविष्टो.

देवी–आम ।

राजा–तेन हि इयमस्यै प्रदीयताम् ।

देवी–वीणाप्पदाणेण भूओ वि उम्मत्ता विअ चिट्ठदि । [ वीणाप्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति । ]

राजा–क्रीडतु क्रीडतु । नैतत् सुलभं श्वशुरकुले । बादरायण ! क्व सा ।

काञ्चुकीयः–अमात्येन सहोपविष्टा ।

राजा–अथ वत्सेष्वधिकृतः ।

काञ्चुकीयः–आहितविनयत्वात् पादयोरङ्के तस्य बहुप्रहारत्वाच्च स्कन्धवाह्येन शयनीयेन मध्यमगृहे प्रवेशितः ।

राजा–हा धिग्, बहुप्रहारः । एष इदानीं निरुपस्कृतस्य तेजसो दोषः । नृशंसः खल्वस्मिन् काल उपेक्षितवान । बादरायण ! गच्छ । भरतरोहकं ब्रूहि—क्रियतामस्य व्रणप्रतिकर्मेति ।

काञ्चुकीयः–यदाज्ञापयति महासेनः ।

राजा–अथवा एहि तावत् ।

काञ्चुकीयः–अयमस्मि ।

राजा–अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम् । आकारसूचिता अस्य प्रीतयो विज्ञेयाः । अतिक्रान्तविग्रहाश्रिताः कथा न कथयितव्याः । क्षुतादिप्रयोगेष्वाशिषोऽभिधेयाः । कालसंवादिना स्तवेनार्च्यः ।

काञ्चुकीयः–यदाज्ञापयति महासेनः । ( निष्क्रम्य प्रविश्य ) जयतु महासेनः । पथ्येव कृतव्रणप्रतिकर्मा वत्सराजः । अकालस्तावदिदानीं द्वितीयस्य प्रतिकर्मण इति । मध्याह्नमारोहति दिवाकरः ।

राजा–अथ कस्मिन् प्रदेशे वीरमानी ।

काञ्चुकीयः–मयूरयाष्टिमुखे ।

राजा–हा धिग्, अनाश्रयणीयः खल्वयं देशः । आतपप्रातिकूल्यार्थं मणिभूमिकायां प्रवेशयेत्याज्ञापय ।

काञ्चुकीयः–यदाज्ञापयति महासेनः । ( निष्क्रम्य प्रविश्य ) यद् महासेनेन, तत् सर्वमनुष्ठितम् । अमात्यस्तु भरतरोहको मह द्रष्टुमिच्छति ।

राजा–व्यक्तं न रोचते तस्मै वत्सराजसत्क्रिया । अस्यैष परिश्रमः । अहमेवैनमनुनयामि ।

देवी–किं सम्बन्धो णिच्चिदो । [ किं सम्बन्धो निश्चितः । ]

राजा–न तावन्निश्चयो गम्यते ।

देवी–अळं दाणि तुवरिअ । बाळा मे दारिआ । [ अलमि त्वरित्वा । बाला मे दारिका । ]

राजा–यदभिरुचितं भवत्यै । प्रविशत्वभ्यन्तरम् ।

देवी–जं महासेणो आणवेदि । ( निष्क्रान्ता सपरिवारा । ) [ यन् सेन आज्ञापयति । ]

राजा–( विचिन्त्य )

पूर्वं तावद् वैरमस्यावलेपादानीतेऽस्मिन् स्यात् तु मध्यस्थता
युद्धाक्लिष्टं संशयस्थं विपन्नं श्रुत्वा त्वेनं संशयं चिन्तयामि ॥ १

( निष्क्रान्तौ । )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति डिण्डिकवेषो विदूषकः । )

विदूषकः–( निरूप्य ) भो ! देवउळपीठिआए मम मोदअमळ्ळ णिक्खिविअ दक्खिणामासआणि गणिअ बन्धिअ पडिणि दाणि मोदअमळ्ळअं ण पेक्खामि । ( विचिन्त्य ) आ एकम अपरितोसिदो ण दाव ओळग्गो मं अणुसरदि । उच्चदाए पाआ अगई कुक्कुराणं । अक्खदभत्तदाए अळोहणीअं पहिआणं ।

अपि णं खाआमि । भोदु ओग्गारइस्सं दाव अहं । ही ही बुड्ढो विअ सूअरवत्थी सुद्धवादं एव्व उग्गिरामि । अहव ळोहिदकच्चाअणीए केरअं मम केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे । ( निरूप्य ) जदि वि एसो बम्हआरी बहुकेहि रूवेहि अविणअं करेदि । भोदु पेक्खिस्सं दाव अहं । भो ! एदं खु मम मोदअमळ्ळअं सिवस्स पादमूळे चिट्ठइ । जाव णं गह्णामि । देहि भट्टा ! देहि मे मोदअमळ्ळअं । भट्टा ! तुवं वि मम चोरो सि । अविहा आळिहिदं खु मम मोदअमळ्ळअं संदावतिमिरेण सुट्ठु ण पेक्खामि । भोदु पमज्जिस्सं दाव अहं । ही ही साहु ळे चित्तअर ! भाव ! साहु । जुत्तळेहदाए वण्णाणं जह जह पमज्जामि, तह तह उज्जळदरं होइ । भोदु, उदएण पमज्जिस्सं । कहिंणुहु उदअं । इदं सोहणं सुद्धतडाअं । अहं विअ सिवो वि दाव एदस्सिं मोदअमळ्ळए णिरासो होदु । [ भोः ! देवकुलपीठिकायां मम मोदकमल्लकं निक्षिप्य दक्षिणामापकान् गणयित्वा बद्ध्वा प्रतिनिवृत्त इदानीं मोदकमल्लकं न प्रेक्षे । आ एकमोदकपरितोषितो न तावदवलग्नो मामनुसरति । उच्चतया प्राकारस्यागतिः कुक्कुराणाम् । अक्षतभक्ततयालोभनीयं पथिकानाम् । अथवा अप्येनं खादामि । भवतु उद्गरिष्यामि तावदहम् । ही ही वृद्ध इव सूकरवस्तिः शुद्धवातमेवोद्गिरामि । अथवा लोहितकात्यायन्याः सम्बन्धि मम सम्बन्धीति कृत्वा शिवेन प्रतिहस्तीकृतं भवेत् । यद्यप्येष ब्रह्मचारी बहुकै रूपैरविनयं करोति । भवतु प्रेक्षिष्ये तावदहम् । भोः ! एष खलु मम मोदकमल्लकः शिवस्य पादमूले तिष्ठति । यावद् एनं गृह्णामि । देहि भर्तः ! देहि मे मोदकमल्लकम् । भर्तः ! त्वमपि मम चोरोऽसि । अविधा आलिखितं खलु मम मोदकमल्लकं सन्तापतिमिरेण सुष्ठु न प्रेक्षे । भवतु प्रमार्जिष्यामि तावदहम् । ही ही साधु रे चित्रकर ! भाव ! साधु । युक्तलेखतया वर्णानां यथा यथा प्रमार्ज्मि, तथा तथो-

ज्वलतरं भवति । भवतु, उदकेन प्रमार्जिष्यामि । कुत्रनुखलु इदं शोभनं शुद्धतटाकम् । अहमिव शिवोऽपि तावद् एतस्मिन् कमलके निराशो भवतु । ]

( नेपथ्ये )

मोदआ ! मोदआ ! हहह । [ मोदकाः ! मोदकाः ! हहह ।

विदूषकः–अविहा एसो उम्मत्तओ मम मोदअमल्लअं गृ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्वाह चिट्ठ चिट्ठ उम्मत्तअ ! चिट्ठ । इमिणा दण्डअट्ठेण सीसं दे भिन्द [अविधा एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसमानः फेनाय मलिनवर्षारथ्योदकमिवेत एवाधावति । तिष्ठ तिष्ठोन्मत्तक ! तिष्ठ । दण्डकाष्टेन शीर्षं ते भिनद्मि । ]

( ततः प्रविशत्युन्मत्तकः । )

उन्मत्तकः–मोदआ! मोदआ! हहह । [मोदकाः ! मोदकाः ! हह

विदूषकः–भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । [ भो त्तक ! आनय मम मोदकमल्लकम् । ]

उन्मत्तकः–किं मोदआ । कहिं मोदआ । कश्श मोदआ । किं मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति । मोदकाः । कुत्र मोदकाः । कस्य मोदकाः । किमिमे मोदका उज्झ अथवा पिनह्यन्ते उताहो खाद्यन्ते । ]

विदूषकः–ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ । [ न खाद्य खाद्यन्ते नोज्झ्यन्ते च । ]

उन्मत्तकः–एसा खु मम रसणा खाइदुकामा लिङ्गाणि करेदि । खलु मम रसना खादितुकामा लिङ्गानि करोति । ]

विदूषकः–भो उम्मत्तअ! आणेहि मम मोदअमल्लअं। मा पर सिणेहं करिअ ओवज्झेहि । [ भो उन्मत्तक ! आनय मम मो मल्लकम् । मा परकीये स्नेहं कृत्वा अवबध्यस्व । ]

उन्मत्तकः—के के मं वज्झन्ति । मोदआ खु मं रक्खन्ति ।

णेवच्छविसेसमण्डिदा पीदिं उवदेदुं उवट्ठिआ ।
ळाअगिहे दिण्णमुळ्ळिआ काळवसेण मुहुत्तदुब्बळा ।। १ ।।

[ के के मां बध्नन्ति । मोदकाः खलु मां रक्षन्ति ।
नेपथ्यविशेषमण्डिताः प्रीतिमुपदातुमुपस्थिताः ।
राजगृहे दत्तमूल्या कालवशेन मुहूर्तदुर्बलाः ॥ ]

विदूषकः—भो उम्मत्तअ ! आणेहि मम मोदअमळ्ळअं । इमिणा पच्चएण उवज्झाअउळं गन्तव्वं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

उन्मत्तकः—मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं । [ मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम् । ]

विदूषकः—किं एळावणे तुवं । [ किमैरावणस्त्वम् । ]

उन्मत्तकः—आम एळावणे अहं । ण हु दाव देवळाजो मं आशणं आलुहदि । शुदं च मया पादपाशिएहि इन्दे वज्झ त्ति । धाराणिअळेहि विज्जुम्मईहि कशाहि ताळिअ वाउब्भामेण परिब्भमन्तेण भिन्दीअदि मेहबन्धणं । [ आम ऐरावणोऽहम् । न खलु तावद् देवराजो मामासनमारोहति । श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति । धारानिगलैः विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण परिभ्रमता भिद्यते मेघबन्धनम् । ]

विदूषकः—भो उम्मत्तअ ! ण तुवं मम दइस्सिसि, विळविस्सं दाव अहं । [भो उन्मत्तक ! न त्वं मम दास्यसि, विलपिष्यामि तावदहम् ।]

उन्मत्तकः—विळव विळव विक्कोस वा विळव । [ विलप विलप विक्रोश वा विलप । ]

विदूषकः—अब्बम्मण्णं भो ! अब्बम्मण्णं । [ अब्रह्मण्यं भोः ! अब्रह्मण्यम् । ]

२९

उन्मत्तकः–अहं पि विळविस्सं । इन्दे वज्झे भो ! इन्दे वज्झे [ अहमपि विलपिष्यामि । इन्द्रो बद्धो भोः ! इन्द्रो बद्धो भोः

विदूषकः–अव्वम्मण्णं भो ! अव्वम्मण्णं । [ अब्रह्मण्यं भोः ! ण्यम् । ]

( नेपथ्ये )

मा भाआहि मा भाआहि बम्हणाउस ! मा भाआहि । बिभीहि मा बिभीहि ब्राह्मणोपासक ! मा बिभीहि । ]

विदूषकः–( सहर्षम् ) आअदे चन्दे समाअदाणि सव्वणक्ख अघं बम्हणभावं । ईहामत्तएण समणएण अभअं दीअदि । चन्द्रे समागतानि सर्वनक्षत्राणि । अघं ब्राह्मणभावः । ईहा श्रमणकेनाभयं दीयते । ]

( ततः प्रविशति श्रमणकः । )

श्रमणकः–मा भाआहि मा भाआहि बम्हणाउस ! मा भा के के इह, किं कय्यं, विळवन्दि । [ मा बिभीहि मा बिभीहि पासक ! मा बिभीहि । के के इह, किं कार्यं, विलपन्ति । ]

विदूषकः–अविहा पडिहारक्खअउत्तिं खु समणओ अणुहो समणअ ! भअवं ! एसो उम्मत्तओ मम मोदअमळ्ळअं ण देदि । [ अविधा प्रतिहाररक्षकवृत्तिं खलु श्रमणकोऽनुभवति श्रमणक ! भगवन् ! एष उन्मत्तको मम मोदकमल्लकं गृही ददाति । ]

श्रमणकः–मोदअं पेक्खामि दाव । [ मोदकं प्रेक्षे तावत् । ]

उन्मत्तकः–पेक्खदु पेक्खदु शमणअ ! भवं । [प्रेक्षतां प्रेक्षतां श्र भवान् । ]

श्रमणकः–थु थु । [ थु थु । ]

विदूषकः–हद्धि उम्मत्तअस्स हत्थे ईहामत्तएण समणएण अधण्णस्स मम मोदआ दिट्ठपुरुवा एव्व संवुत्ता । [हा धि

त्तकस्य हस्ते ईहामात्रकेण श्रमणकेन थुथूकृता अधन्यस्य मम मोदका दृष्टपूर्वा एव संवृत्ताः । ]

श्रमणकः—भो उम्मत्तआउस ! णीआदेहि णीआदेहि एदाणि मोदआणि कत्थूलिआफेणपण्डराणि बहुपिट्ठसमिद्धकोमळाणि णिट्ठाणिआ सुरा विअ महुराणि । मा दे खाइदाणि खअं उप्पादन्ति । [ भो उन्मत्तकोपासक ! निर्यातय निर्यातय एतानि मोदकानि कस्थूलिकाफेनपाण्डराणि बहुपिष्टसमृद्धकोमलानि निष्ठानिताः सुरा इव मधुराणि । मा ते खादितानि क्षयमुत्पादयन्तु । ]

विदूषकः—अविहा मोदआणि त्ति करिअ कण्डिळळड्डुआ मे पडिच्छिदा । [ अविधा मोदका इति कृत्वा कण्णिललड्डुका मे प्रतीष्टाः । ]

श्रमणकः—उम्मत्तआउस ! णीआदेहि णीआदेहि । जदि ण णीआदेसि, तुवं सवेमि । [ उन्मत्तकोपासक ! निर्यातय निर्यातय । यदि न निर्यातयसि, त्वां शपामि । ]

उन्मत्तकः—पशीददु पशीददु शमणअ ! भअवं । मा खु मा खु मं शविदुं । गह्ण गह्ण । [ प्रसीदतु प्रसीदतु श्रमणक ! भगवान् ! माखलु माखलु मां शप्तुम् । गृहाण गृहाण । ]

श्रमणकः—बम्हणाउस ! पेक्ख पेक्ख मम प्पभावं । [ब्राह्मणोपासक ! प्रेक्षस्व प्रेक्षस्व मम प्रभावम् । ]

विदूषकः—एसो उम्मत्तओ एदेण ईहामत्तएण समणएण उज्झिदं सावं पेक्खिअ मोदअमल्लअं भीदभीदं अग्गङ्गुलिआए पसारिदाए ठाविअ चिट्ठइ । भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं ।[ एष उन्मत्तक एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति । भो उन्मत्तक ! आनय मम मोदकमल्लकम् । ]

श्रमणकः—एदु एदु भवं। एदेहि मोदएहि मं सोत्थि वाअइस्स
[ एतु एतु भवान्। एतैर्मोदकैर्मां स्वस्ति वाचयिष्यसि। ]

विदूषकः—ही ही ममकेरएहिं सोत्थि वाएमि। मए वि कोडुम्बि
हत्थादो पडिग्गहग्गहीदाणि। ताणि भवदो वि उवाअणं भवि
सो वि समिद्धो होदु। एसो उम्मत्तओ अग्गिगिहं अ
गच्छइ। ट्ठिदो मज्झह्णो। पुव्वह्णे वि दाव अअं देसो
भविस्सदि। जाव अहं वि इमाणि दक्खिणामासआणि म
णिक्खिविअ गच्छामि। एकस्स शाडिआए कय्यं अवरस्स मु
[ हीही मदीयैः स्वस्ति वाचयामि। मयापि कौटुम्बिकस्य हस्तात
ग्रहगृहीतानि। तानि भवतोऽप्युपायनं भविष्यति। सोऽपि
भवतु। एष उन्मत्तकोऽग्निगृहमभिमुखो गच्छति। स्थितो म
पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति। यावदहमपीमान्
माषकान् मार्गगेहे निक्षिप्य गच्छामि। एकस्य शाटिकया कार्यं
मूल्येन। ]

( सर्वे अग्निगृहं प्रविशन्ति। )

यौगन्धरायणः—वसन्तक! शून्यमिदमग्निगृहम्।

विदूषकः—आम भो! सुञ्ञं खु इदं। [आम भोः! शून्यं खलि

यौगन्धरायणः—तेन हि परिष्वजेतां भवन्तौ।

उभौ—बाढम्। ( परिश्वजेते )

यौगन्धरायणः—भवतु भवतु। तुल्यपरिश्रमौ भवन्तौ।
भवान्। भवानप्यास्ताम्।

उभौ—बाढम्।

( सर्वे उपविष्टाः )

यौगन्धरायणः—वसन्तक! अपि दृष्टस्त्वया स्वामी।

विदूषकः—आम भो! दिट्ठो तत्तभवं। [आम भोः! दृष्टस्तत्रभ

यौगन्धरायणः—हन्तभोः, अतिक्रान्तयोगक्षेमा रात्रिः । दिवस इदानीं प्रतिपाल्यते ।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः ॥ २ ॥

रुमण्वान्—सम्यग् भवानाह । तुल्येऽपि कालविशेषे निशैव बहुदोषा बन्धनेषु । कुतः,

व्यवहारेष्वसाध्यानां लोके वा प्रतिरुध्यताम् ।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥ ३ ॥

यौगन्धरायणः—वसन्तक ! स्वामिना सह कथितं ननु ।

विदूषकः—आम भो ! चिरं एव्व च म्हि तत्तहोदा ओवज्झो । अज्ज चउद्दसीं ह्णाअमाणो पडिवालिदो अ । [ आम भोः ! चिरमेव चास्मि तत्रभवतावबद्धः । अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च । ]

यौगन्धरायणः—स्नातः स्वामी ।

विदूषकः—ण्हादो अत्तभवं । [ स्नातोऽत्रभवान् । ]

यौगन्धरायणः—कृतं देवकार्यम् ।

विदूषकः—आम भो ! पणाममत्तेण पूइदा देवदा । [ आम भोः ! प्रणाममात्रेण पूजिता देवताः । ]

यौगन्धरायणः—एतामपि बहुमतामवस्थां प्राप्तः स्वामी । कुतः,

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति ।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति ॥ ४ ॥

रुमण्वान्—भवत इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः ।

यौगन्धरायणः—वसन्तक ! गच्छ भूयः स्वामिनं प
विज्ञाप्यतां च स्वामी—या सा प्रयाणं प्रतीह प्रस्तुता कथा,
श्वः प्रयोगकाल इति । कुतः, स्थानावगाहयवसशय्याभागेष्वाश्र
न्यस्तौषधिव्याजो नलागिरिर्मन्त्रौषधिनियमसम्भृतः पुरा[1]
व्यामोहितः । अनुकूलमारुतमोक्तव्यः सज्जितो धूपः । गो
कूलोऽस्य सज्जितः प्रतिगजमदः । शालासन्निकृष्टमल्प
गृहमादीपयितुमग्नित्रासित्वाद् वारणानाम् । गजपतिचित्तोद्भ्र
देवकुलेषु स्थापिताः शङ्खदुन्दुभयः । तेन नादेन सर्वसाधनप
शरीरेणावश्यं श्वः प्रद्योतेन स्वामी शरणमुपगन्तव्यः । ततः स्व
शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सहव्यापन्नां घोषवतीं ह
कृत्वा नलागिरिः स्वाधीनः कर्तव्यः । ततो व्यवस्थितासन
स्वामी नलागिरौ,

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वन
एकाहे व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशां
येनैव द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ॥ ५ ॥

इति ।

रुमण्वान्—वसन्तक ! किमिदानीं चिन्त्यते ।

विदूषकः—एव्वं चिन्तेमि महन्तो खु भवदो पयत्तो विवज्जि
त्ति । [ एवं चिन्तयामि महान् खलु भवतः प्रयत्नो विपत्स्यत

उभौ—न खलु वयं विज्ञातारः ।

विदूषकः—अहं पुठमं पच्चा भवन्तो । [ अहं प्रथमं पश्चाद् भव

यौगन्धरायणः—अथ किंकृता कार्यविपत्तिः ।

विदूषकः—वच्छराअस्स अण्णकय्यदाए[2]। [ वत्सराजस्यान्यकार्य

1 पुराणकर्माणि. 2 अत्तकय्यदाए.

यौगन्धरायणः–कथमिव ।

विदूषकः–सुणह भवन्तो । [ श्रृणुतां भवन्तौ ]

उभौ–अवहितौ स्वः ।

विदूषकः–जा सा काळट्ठमी अदिक्कन्दा, तहिं तत्तहोदी वासवदत्ता णाम राअदारिआ धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ अवणीदकञ्चुआए सिविआए ओघट्टिदपणाळीपस्सुदसळिळविसमं राअमग्गं परिहरिअ जं तं बन्धणदुवारस्स अग्गदो भअवदीए[1] जक्खिणीए ट्ठाणं, तस्सिं देवकय्यं कत्तुं गआ आसी। [या कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका धात्रीद्वितीया कन्यकादर्शनं निर्दोषमिति कृत्वापनीतकञ्चुकायां शिबिकायामवघट्टितप्रणालीप्रस्रुतसलिलविषमं राजमार्गं परिहृत्य यत्तद् बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतासीत् ]

यौगन्धरायणः–ततस्ततः ।

विदूषकः–तदो तत्तभवं तं दिअसं अब्भन्तरबन्धणपरिरक्खअं सिवअं णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो । [ ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः । ]

उभौ–ततस्ततः ।

विदूषकः–तदो पुरुसक्खन्धपरिवट्टणट्ठिदाए सिविआए पकामं दिट्ठा सा राअदारिआ । [ ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिबिकायां प्रकामं दृष्टा सा राजदारिका । ]

यौगन्धरायणः–ततस्ततः ।

विदूषकः–किं तदो तदो त्ति । बन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो राअळीळं कत्तुं । [किं ततस्तत इति । बन्धनमिदानीं प्रमदवनं संभाव्य प्रवृत्तो रागलीलां कर्तुम् । ]

[1] भअवदीए अवान्तिसुन्दरीए.

यौगन्धरायणः–न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ।

विदूषकः–भो ! सङ्घआरिणो अणत्थ त्ति ईदिसं एव्व । [ सङ्घचारिणोऽनर्था इतीदृशमेव ]

यौगन्धरायणः–सखे ! रुमण्वन् ! स्थिरीक्रियतामात्मा । वेषेण जरा गन्तव्या ।

विदूषकः–भो ! अहं च एदेण उत्तो—भणेहि जोअन्धरा जहसमत्थिदा समत्थणा ण रोअदे मे । समाणे गमणे प अवमाणविसेसो चिन्तीअदि । मा कामप्पधाण त्ति मं अवम अवमाणस्स अवजिदिं अण्णेसामि त्ति । [ भोः ! अहं चैतेन भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति म न्यस्व अवमानस्यापचितिमन्विष्यामिति । ]

यौगन्धरायणः–अहो शत्रुजनापहास्यमभिधानम् । अहो निर खलु बुद्धेः । अहो सुहृज्जनसन्तापकारणम् । अदेशकाले कामयते स्वामी । कुतः,

शक्ता दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम् ।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषै राजेति शब्दापनम् ॥ ६ ॥

विदूषकः–भो ! दंसिदो सिणेहो । णिव्विट्ठं पुरुसआरं । साहु णं गच्छामो । [ भोः ! दर्शितः स्नेहः । निर्विष्टः पुरुषकारः । सा त्वैनं गच्छामः । ]

यौगन्धरायणः–वसन्तको भवान् ननु । वसन्तक ! मा मैवम्

परित्यजाम सन्तप्तं दुःखेन मदनेन च ।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते ॥ ७ ॥

विदूषकः–एव्वं एव्व जरं गमिस्सामो । [एवमेव जरां गमिष्यामः ।]
यौगन्धरायणः–तन्नतु श्लाघ्यम् ।
विदूषकः–सिळाघणीओ भवे, जदि लोओ जाणादि । [ श्लाघनीयं भवेद् , यदि लोको जानाति । ]
यौगन्धरायणः–न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः ।
विदूषकः–सो वि दाव ण जाणादि । [ सोऽपि तावन्न जानाति । ]
यौगन्धरायणः–काले ज्ञास्यति ।
विदूषकः–कदमो दाणि सो काळो । [ कतम इदानीं स कालः । ]
यौगन्धरायणः–यदेयमारम्भसिद्धिः ।
विदूषकः–तदो तादिसो भवं बन्धणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु । [ ततस्तादृशो भवान् बन्धनाद्राजानमन्तःपुराद्राजदारिकामुभे निर्यातयतु । ]
रुमण्वान्–इह भवता द्रष्टव्यम् ।
यौगन्धरायणः–उभयामिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८ ॥

अपि च,

यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ९ ॥

( कर्णं दत्त्वा ) अये शब्द इव । ज्ञायतां शब्दः ।
विदूषकः–भो ! तह । ( निष्क्रम्य प्रविश्य ) भो ! पडिउत्तदिवसविस्सम्भेण अविरळं सञ्चरन्तो जणो दीसइ । किं दाणि करम्ह । [भोस्तथा । भोः ! परिवृत्तदिवसविस्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः । ]
रुमण्वान्–तेन हि चतुर्द्वारमग्निगृहं, भिद्यतां नः सङ्घातः ।

यौगन्धरायणः–न न। अभिन्नो नः सङ्घातः। भिद्यतामरिसङ्घ स्वकार्यमनुष्ठीयताम्।

उभौ–तह। [ तथा ] ( निष्क्रान्तौ। )

उन्मत्तकः–हीं हीं चन्दं गिळदि ळाहू। मुञ्च मुञ्च चन्दं। मुञ्चेशि, मुहं दे पाडिअ मुञ्चावइस्सं। एशे एशे दुट्ठअश्शे प आअच्छदि। एशे एशे चउप्पहवीहिआअं। जाव णं आ बळिं भक्खिस्सं। एशे एशे दाळअभट्टा! मं ताळेह। माखु मं ताळेह। किं भणाशि–अम्हाणं किं पि णच्चेहि त्ति। दक्खह दाळअभट्टा! एशे दाळअभट्टा! पुणो वि मं ताळेह आहि। माखु माखु ताळेह। तेण हि अहं पि तुम्हे ता [ ही ही चन्द्रं गिरति राहुः। मुञ्च मुञ्च चन्द्रम्। यदि न मुञ्चसि ते पाटयित्वा मोचयिष्यामि। एष एष दुष्टाश्वः परिभ्रष्ट आग एष एष चतुष्पथवीथिकायाम्। यावदेनमारुह्य बलिं भक्षयिष्य एते एते दारकभर्तारः! मां ताडयथ। माखलु माखलु मां ता किं भणथ—अस्माकं किमपि नृत्येति। पश्यत पश्यत दारकभ एते दारकभर्तारः! पुनरपि मां ताडयथ यष्टिभिः। माखलु ताडयत। तेन ह्यहमपि युष्मान् ताडयामि। ]

( निष्क्रान्तः। )

तृतीयोऽङ्कः।

---

## अथ चतुर्थोऽङ्कः।

( ततः प्रविशति भटः। )

भटः–को काळो अहं भट्टिदारिआए वासवदत्ताए उदए क कामाए भद्दवदीपरिचारअं गत्तसेवअं ण पेक्खामि। भाव पुप्फ गत्तसेवअं ण पेक्खासि। किं भणासि–एसो गत्तसेवओ क ण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति। गच्छदु भावो। (

इदं कण्डिळसुण्डिगिणीए गेहं । जाव णं सद्दावेमि । भो गत्तसेवअ ! गत्तसेवअ ! । [ कः कालोहं भर्तृदारिकाया वासवदत्ताया उदके क्रीडातुकामाया भद्रवतीपरिचारकं गात्रसेवकं न प्रेक्षे । भाव पुष्पदन्तक ! गात्रसेवकं न प्रेक्षसे । किं भणसि–एष गात्रसेवकः कण्डिलशौण्डिक्या गेहं प्रविश्य सुरां पिबतीति । गच्छतु भावः । इदं कण्डिलशौण्डिक्या गेहम् । यावदेनं शब्दापयामि । भो गात्रसेवक ! गात्रसेवक ! । ]

( नेपथ्ये )

को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ ! गत्तसेवअ ! त्ति मं सद्दावेदि । [ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवकेति मां शब्दापयति । ]

भटः–एसो गत्तसेवओ सुरं पिविअ पिविअ हसिअ हसिअ मदिअ मदिअ जवापुप्फं विअ रत्तळोअणो इदो एव्व आअच्छदि । एदस्स पुरदो ण चिट्ठिस्सं । ( निवृत्य स्थितः । ) [ एष गात्रसेवकः सुरां पीत्वा पीत्वा हसित्वा हसित्वा मदित्वा मदित्वा जपापुष्पमिव रक्तलोचन इत एवागच्छति । एतस्य पुरतो न स्थास्यामि । ]

( ततः प्रविशति यथानिर्दिष्टो गात्रसेवकः । )

गात्रसेवकः–को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ ! गत्तसेवअ ! त्ति मं सद्दावेदि । पाणागारादो णिक्कन्तो दिट्ठ म्हि मम सुसुरेण सुरुट्ठेण । अमुदअमळ्ळएण घिदमरिअळोणरूशिदे मंशखण्डे मुहे पक्खित्ते अ । णुसा रज्जइ पीदा जइ । अत्ता णं दण्डुज्जुआ होइ ।

धण्णा सुराहि मत्ता धण्णा सुराहि अणुळित्ता ।
धण्णा सुराहि ह्णादा धण्णा सुराहि संत्रविदा ॥ १ ॥

अधण्णा अत्तणो पुत्तदाराणं कट्ठं पिट्ठं सुणन्ता जे मूढा णरा सुसमिद्धा सुरातटाअं ण जोजअंति । ता जाणे जमळोए वा णरअं अत्थि ण त्थि अ ।

[ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेक ! इ शब्दापयति । पानागारान्निष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरुष्टेन। मल्लकेन घृतमरिचलवणरूषितो मांसखण्डो मुखे प्रक्षिप्तश्च । स्नुषा पीता यदि । श्वश्रूर्ननु दण्डोद्यता भवति ।

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः ।
धन्याः सुराभिः स्नाता धन्याः सुराभिः संज्ञापिताः ॥ १४

अधन्या आत्मनः पुत्रदाराणां कष्टं पिष्टं श्रृण्वन्तो ये मूढा सुसमृद्धाः सुरातटाकं न योजयन्ति । ततो जाने यमलोके वा स्ति नास्ति च । ]

भटः–( उपसृत्य ) भो गत्तसेवअ ! को काळो तुमं अण्णे भट्टिदारिआए वासवदत्ताए उदए कीळिदुकामाए भद्दव दिस्सदि । तुमं दाव मत्तो एत्थ आहिण्डसि ।

[ भो गात्रसेवक ! कः कालस्त्वामन्विष्यामि । भर्तृदारिकाया वासव उदके क्रीडितुकामाया भद्रवती न दृश्यते । त्वं तावन्मत्तोऽत्राहिण

गात्रसेवकः–जुज्जइ । सा अ णं मत्ता, सो पुरुसो वि अहं वि मत्तो, तुमं वि मत्तो, सव्वं मत्तसमं होइ ।

[ युज्यते । सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्तः, मत्तः, सर्वं मत्तसमं भवति । ]

भटः–सव्वं दाव चिट्ठदु । राअउळे भद्दपीठिअं णणिक्कमिअ अअं आहिण्डदि त्ति ।

[ सर्वं तावत् तिष्ठतु । राजकुले भद्रपीठिकां ननिष्क्राम्य कुतो हिण्डत इति । ]

गात्रसेवकः–इदो आहिण्डामि, एत्थ पिबामि, एदेण पिबामि संरम्भेण । किं करीअदु ।

१ भद्दपीठिआ ण णिक्कमदि । कुदो अअं पिबादित्ति.

[ इत आहिण्डे, अत्र पिबामि, एतेन पिबामि, मा संरम्भेण। किं क्रियताम् । ]

भटः–हिज्जउ असम्बन्धप्पळावो । सिग्घं भद्दवदिं पवेसेहि ।
[ भवत्वसम्बन्धप्रलापः । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः–पविसदु पविसदु भद्दवदी । अंघो मए भद्दवदीए अङ्कुसं आढत्तं । [ प्रविशतु प्रविशतु भद्रवती । अङ्घ्रो मया भद्रवत्या अङ्कुशमाहितम् । ]

भटः–सभावविणीदाए भद्दवदीए अङ्कुसेण किं कय्यं । गच्छ, सिग्घं भद्दवदिं पवेसेहि [ स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम् । गच्छ, शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः–पविसदु पविसदु भद्दवदी । अंघो मए भद्दवदीए खुरप्पमाळा आढत्ता । [ प्रविशतु प्रविशतु भद्रवती । अङ्घ्रो मया भद्रवत्याः क्षुरप्रमालाहिता । ]

भटः–पुप्फबन्धिआए भद्दवदीय खुरप्पमाळाए किं कय्यं । सिग्घं भद्दवदिं पवेसेहि । [पुष्पबन्ध्याया भद्रवत्याः क्षुरप्रमालया किं कार्यम् । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः–पविसदु पविसदु भद्दवदी । अंघो मए भद्दवदीए घण्टा आढत्ता ! [ प्रविशतु प्रविशतु भद्रवती । अङ्घ्रो मया भद्रवत्या घण्टाहिता । ]

भटः–उदए कीळिदुकामाए भद्दवदीए घण्टाए किं कय्यं । सिग्घं भद्दवदिं पवेसेहि । [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम् । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः–पविसदु पविसदु भद्दवदी । अंघो मए भद्दवदीए कसिअं आढत्तं । [प्राविशतु प्रविशतु भद्रवती । अङ्घ्रो मया भद्रवत्याः कशिका आहिता । ]

भटः—कसिएण किं कय्यं । सिग्घं भद्दवदिं पवेसेहि । [ का किं कार्यम् । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी । अंघो । [ प्रविशतु प्र भद्रवती । अङ्घो । ]

भटः—किं अंघो । [ किम् अङ्घो । ]

ग्रामसेवकः—अंघो मए । [ अङ्घो मया । ]

भटः—किं तुए । [ किं त्वया । ]

गात्रसेवकः—अंघो भद्द । [ अङ्घो भद्र । ]

भटः—किं भद्दत्ति । [ किं भद्रेति । ]

गात्रसेवकः—अंघो भद्दवदी । [ अङ्घो भद्रवती । ]

भटः—किं भद्दवदी । [ किं भद्रवती । ]

गात्रसेवकः—भद्दवदी पि आढत्ता । [ भद्रवत्यप्याहिता । ]

भटः—ण तुवं एत्थ अवरज्झो । कण्डिळसुण्डिकिणी खु अवर राअवाहणं गह्णिअ सुरं देदि । [ न त्वमत्रापराद्धः । कण्डिल खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति । ]

गात्रसेवकः—अंघो मए उत्तं—मा मूळविद्धिं विणासेहि [ अङ्घो मयोक्तम्—मा मूलवृद्धिं विनाशयेति । ]

भटः—हं सद्दो विअ । [ हं शब्द इव । ]

गात्रसेवकः—अंघो जाणामि जाणामि, कण्डिळसुण्डिकिणी भिन्दिअ भद्दवदी पळाअदि । [ अङ्घो जानामि जानामि, क शौण्डिक्या गेहं भित्वा भद्रवती पलायते । ]

भटः—किं भणासि—( आकाशे ) एसो भट्टा वच्छराओ वा गह्णिअ णिग्गदो त्ति । [ किं भणसि—एष भर्ता वत्सराजो दत्तां गृहीत्वा निर्गत इति । ]

गात्रसेवकः—( सहर्षम् ) अविघ्नमस्तु स्वामिनः ।

भटः—पिब पिब। अज्ज वि तुमं मत्तो आहिण्डेहि। [ पिब पिब। अद्यापि त्वं मत्त आहिण्डस्व। ]

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्धरायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः। यावदहमपि सुहृज्जनस्य संज्ञां करोमि। एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति। भो भोः सुहृदः! श्रृण्वन्तु श्रृण्वन्तु भवन्तः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥२॥

क नु खल्वार्ययौगन्धरायणः। (विलोक्य) अये अयमत्रभवान् आर्ययौगन्धरायणः। य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकरचितचर्मव्यग्रवामाग्रहस्तः।
विरचितबहुचीरः पाण्डराबद्धपट्टः
सतडिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः ॥ ३ ॥

अहो[1] महत् प्रवृत्तं युद्धम्।

हत्वा गजान् सगजिनः सहयांश्च योधा-
नक्षौहिणीमतिविगाह्य बलान्मुहूर्तम्।
नागेन्द्रदन्तमुसलाहतभग्नबाहु-
र्भ्रष्टायुधोऽपि ननिवृत्तपदोऽभियातः ॥ ४ ॥

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः। यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि। ( निष्क्रान्तः। )

---

१ अहो प्रतिभयमिदं युद्धम्। अहो महत्प्रतिभयं प्रवृत्तमिदं युद्धम्.

भटः–किंणुखु एदं । पाआरतोरणवज्जं सव्वं कोसम्बी खु होदु, इमं वुत्तन्तं अमच्चस्स निवेदेमि । [ किन्नुखल्वेतत् । रतोरणवर्जं सर्वं कौशाम्बी खल्विदम् । भवत्विमं वृत्तान्तमम निवेदयामि । ]

( निष्क्रान्तः । )

## प्रवेशकः ।

( ततः प्रविशतः साधारणौ । )

उभौ–उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सर उत्सरत । ]

प्रथमः–अंघो कण्ठस्स दीअमाणस्स ण उच्चं विरमदि । [ कण्ठस्य दीर्यमाणस्य नोच्चं विरमति । ]

द्वितीयः–अंघो भट्टिदारिआए वासवदत्ताए अवगअणविब्भ विरुवन्तस्स मे वअणं कोच्चि ण सुणादि । अंघो किं भणह–कि मित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो भणह—कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धरा असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । सुन्दरस्स हत्थिणो दन्तन्तचोदिदो असी विवण्णो । असि गहीदो, ण पुरुसदोसेण । [ अङ्घो भर्तृदारिकाया वासवदत्ताय नयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न श्रृणोति । अङ्घो किं किन्निमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं कथं गृहीत इति । श्रृण्वन्त्वार्याः । आर्ययौगन्धरायणेनासिद्वितीये हिण्या अग्रवेगो मुहूर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्त दितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण । ]

प्रथमः—अंघो अप्पमत्ता होह तुम्हे । पाआरतोरणवज्जं कोसम्बी खु इअं । [ अङ्घो अप्रमत्ता भवत यूयम् । प्राकारतो सर्वं कौशाम्बी खल्वियम् । ]

उभौ–ओदरदु ओदरदु अय्यो ओदरदु ।
[ अवतरत्ववतरत्वार्योऽवतरतु । ]
( ततः प्रविशति यौगन्धरायणः बद्धबाहुः फलकशयनेनानीयमानः । )
यौगन्धरायणः–अयमहमवतरामि ।

रिपुगतमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशस्त्रदोषात् ।
अयमहमपनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥ ५ ॥

भोः ! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय
　कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
　प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ६ ॥

उभौ–उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]
यौगन्धरायणः–मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः ।

पश्यन्तु मां नरपतेः पुरुषाः ससत्त्वा
　राजानुरागनियमेन विपद्यमानम् ।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
　तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥ ७ ॥

उभौ–उस्सरह उस्सरह । किं तुम्हेहि ण दिट्ठपुरुवो अय्यजोअन्धराअणो ! [ उत्सरतोत्सरत । किं युष्माभिर्न दृष्टपूर्व आर्ययौगन्धरायणः । ]
यौगन्धरायणः– दृष्टः पूर्वं, न त्वेवम् । मम हि,

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८ ॥

( प्रविश्य )

भटः—अय्य ! पिअं दे णिवेदेमि । गहीदो किळ वच्छ
३ [आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः ।]

यौगन्धरायणः—नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रव
ग्रहणमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु

भद्र ! कथं गृहीत इति श्रुतम् ।

भटः—अणुसारिअ णळागिरिणा गहीदो किळ । [ अनुसार्य
३ गिरिणा गृहीतः किल । ]

यौगन्धरायणः—अस्ति वाहनसामर्थ्यम् । असमायुक्तस्तु सः

गजस्याधोरणायुक्तो जवो भवति शिक्षया ।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति ॥ १० ॥

भटः—अय्य ! अमच्चो आह—आउहागारे चिट्ठदु किळ अ
पुरुसगुत्तो अअं देसो त्ति । [ आर्य ! अमात्य आह—आयु
३ तिष्ठतु किलार्यः । पुरुषगुप्तोयं देश इति । ]

यौगन्धरायणः—अहो हास्यमभिधानम् ।

अग्निं बद्ध्वा वत्सराजाभिधानं यस्मिन् काले सर्वतो रक्षित
तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः

( परिक्रम्य )

भटः—इदं आउहागारं । पविसदु अय्यो । [ इदमायुधा
३ प्रविशत्वार्यः । ]

( प्रविश्य ) भटः—अमच्चो आह—अवणीअदु बन्धणं
[ अमात्य आह—अपनीयतां बन्धनमिति । ]

यौगन्धरायणः—अक्षीणं मां कुरु। व्यक्तं भरतरोहको मां द्रष्टुमिच्छति। अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि।

मद्वाक्यैः परिखिद्यमानहृदयं रोषात् प्रमत्ताक्षरैः
प्रारब्धेषु नयच्छलेषु तुलितं तुल्याधिकारोज्झितम्।
सूक्तैः शास्त्रविनिश्चितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मह्यमपक्रियाविनिहतं व्रीलादिवाधोमुखम् ॥ १२ ॥

(ततः प्रविशति भरतरोहकः।)

भरतरोहकः—कासौ कासौ यौगन्धरायणः।

अवसितनिजकार्यं[1] वञ्चनैर्दुर्निरीक्षं
कथमिव परिभाषे भर्तुरर्थे विपन्नम्॥
चिरमवनतकार्यं[2] चापि निर्युक्तमन्त्रं
भुजगमिव सरोषं धर्षितं चोच्छ्रितं च ॥ १३ ॥

भटः—अय्यजोअन्धराअणो अय्यं पडिवाळअन्तो आउहागारे चिट्ठइ। [आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति।]

भरतरोहकः—भवतु भवतु।

मन्त्रित्वे वञ्चितो ह्येष सव्याजं नीलहस्तिना।
प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते॥ १४ ॥

भटः—अय्य! एसो अमच्चो। [आर्य! एषोऽमात्यः।]

भरतरोहकः—(उपगम्य) भो यौगन्धरायण!।

यौगन्धरायणः—भोः!।

भटः—अहो सरस्स गम्भीरदा। अय्यस्स एकक्खरेण पूरिदो अयं देसो। [अहो स्वरस्य गम्भीरता। आर्यस्यैकाक्षरेण पूरितोऽयं देशः।]

१ °नृप°.
२ °सुपनत°.

६ भरतरोहकः–( उपविश्य ) भोः ! यौगन्धरायण इत्यशरीराण्य
श्रूयन्ते । दिष्ट्या भवान् दृश्यते ।

यौगन्धरायणः–दिष्ट्या भवान् दृश्यत इति । पश्यतु भवान्

एवं रुधिरदिग्धाङ्गं वैरं नियममास्थितम् ।
गुरोरवजितं हत्वा शान्तं द्रौणिमिव स्थितम् ।। १५ ।।

भरतरोहकः–अहो छलेनागतगजारम्भस्यात्मसम्भावना ।

यौगन्धरायणः–किं छलेनेति । तन् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो नरपतिर्बाहूपधानां क्षितिम् ।
राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो[1] मम ।। १६ ।।

भरतरोहकः–भो यौगन्धरायण ! यदग्निसाक्षिकं महासेनस्य
शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं भोस्तस्करप्रवृत्ति

३ यौगन्धरायणः–मा मा भवानेवम् । विवाहः खल्वेष स्वामिनः

भारतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं करिष्यति ।। १७ ।।

भरतरोहकः–अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः ।
दानीं किं नावेक्षते ।

३ यौगन्धरायणः–मा मा भवानेवम् ।

यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु
ततो विमुक्तः स्वशरीररक्षणे यशः प्रदातुं सुहृदां च जीवितम्

भरतरोहकः–यद्येवं, नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पु
स्वामी ।

---

१. नैवात्र दोषो मम.

यौगन्धरायणः—नेनि पश्यत्युपक्रोशभयात् ।

भरतरोहकः—अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति । समरावजितेषु शत्रुषु किमाह शास्त्रम् ।

यौगन्धरायणः—वधः ।

भरतरोहकः—वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः ।

यौगन्धरायणः—एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम् ।

भरतरोहकः—एतदपि सम्भाव्यं मन्यते स्वामी ।

यौगन्धरायणः—कः संशयः ।

हस्तप्राप्तो हि वो राजा रक्षितस्तेन साधुना ।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निरात्यते ॥ १९ ॥

भरतरोहकः—भवतु भवतु । महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः ।

यौगन्धरायणः—अहो हास्यमभिधानम् ।

भवतां चाग्रतो यातः शेषकार्येषु का कथा ।
समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः ॥ २० ॥

( प्रविश्य )

काञ्चुकीयः—( कर्णे ) एवमिव ।

भरतरोहकः—प्रकाशमुच्यताम् ।

काञ्चुकीयः—

कारणैर्बहुभिर्युक्तैः कामं नापकृतं त्वया ।
गुणेषु न तु मे द्वेषो भृङ्गारः प्रतिगृह्यताम् ॥ २१ ॥

इति ।

यौगन्धरायणः—हा धिक् ।

गृहा न निर्वान्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम् ।
इयं तु पूजा मम दण्डधारिणः कृतापराधस्य हि सत्कृतिर्वधः ॥ २२ ॥

( नेपथ्ये हाहाकारः क्रियते । )

भरतरोहकः–अये,

को नु खल्वेष सहसा प्रासादाग्राद् विनिःसृतः ।
श्येनपक्षाभिमृष्टानां कुररीणामिव ध्वनिः ॥ २३ ॥

भोः ! ज्ञायतां शब्दः ।

काञ्चुकीयः–यदाज्ञापयत्यार्यः । ( निष्क्रम्य प्रविश्य ) एषा त त्यङ्गारवती शोकाभिभूतहृदया प्रासादाच्छरीरं विमोक्तुकामा सेनेनाभिहिता यथा–क्षत्रधर्मेणोद्दिष्टस्ते दुहितुर्विवाहः । किं हर्षकाले सन्तप्यसे । ताचित्रफलकस्थयोर्वत्सराजवासवदत्तयो होऽनुष्ठीयताम् इति । तत्र हि,

स्त्रीजनेनाद्य सहसा प्रहर्षव्याकुलक्रमा ।
क्रियते मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया ॥ २४ ॥

यौगन्धरायणः–एवं सम्बन्धं मन्यते महासेनः । तेन ह्या भृङ्गारः ।

काञ्चुकीयः–गृह्यताम् । ( उपनयति । )

भरतरोहकः–भो यौगन्धरायण ! किं ते भूयः प्रियमुपहरति सेनः ।

यौगन्धरायणः–यदि मे महासेनः प्रसन्नः, किमतः परमि

( भरतवाक्यम् )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २५ ॥

( निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

प्रतिज्ञानाटिकावसिता ।

# श्लोकानुक्रमणी ।

---

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतम्

# अविमारकम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः–

उत्क्षिप्तां सानुकम्पं सलिलनिधिजलादेकदंष्ट्राग्ररूढा-
  माक्रान्तामाजिमध्ये निहतदितिसुतामेकपादावधूताम् ।
सम्भुक्तां प्रीतिपूर्वं स्वभुजवशगतामेकचक्राभिगुप्तां
  श्रीमान् नारायणस्ते प्रदिशतु वसुधामुच्छ्रितैकातपत्राम् ॥ १ ॥

( नेपथ्याभिमुखमवलोक्य ) आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी–अय्य ! इअम्हि । [ आर्य ! इयमस्मि । ]

सूत्रधारः–आर्ये ! तव वदनजनितकौतूहलेन स्मितेन निवेदित इवान्तर्गतो भावः । ननु किञ्चिद् वक्तुकामासि ।

नटी–को एत्थ विम्हओ अय्यो भावण्णो त्ति । [ कोऽत्र विस्मय आर्यो भावज्ञ इति । ]

सूत्रधारः–तेन हि स्वैरमभिधीयताम् ।

नटी–इच्छेमि अय्येण सह उय्याणं गन्तुं । अत्थि मे तहिं इत्थिआकरणीअं णिअमकय्यं । [ इच्छाम्यार्येण सहोद्यानं गन्तुम् । अस्ति मे तत्र स्त्रीकरणीयं नियमकार्यम् । ]

( नेपथ्ये )

भूतिक ! त्वमप्युद्यानं गच्छ कुरङ्गीरक्षणार्थम् । मदभावस्थो ह्यञ्जनगिरिः ।

सूत्रधारः–आर्ये ! ननु भवत्या श्रुतम्–उद्यानं गता राजपुत्र्‍ तस्मात् सम्प्रति सर्वतः परिगुप्तानि भवन्त्युद्यानानि । प्रतिनिवृ राजसुतायां स्वैरं गमिष्यावः ।

नटी–जं अय्यो आणवेदि । [ यदार्य आज्ञापयति । ]

( निष्क्रान्तौ )

स्थापना ।

---

( ततः प्रविशति राजा सपरिवारः )

राजा–

इष्टा मखा द्विजवराश्च मयि प्रसन्नाः
प्रज्ञापिता भयरसं समदा नरेन्द्राः ।
एवंविधस्य च न मेऽस्ति मनःप्रहर्षः
कन्यापितुर्हि सततं बहु चिन्तनीयम् ॥ २ ॥

केतुमति ! गच्छ देवीमानय ।

प्रतिहारी–जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति ।] ( निष्क्रा

( ततः प्रविशति सपरिवारा देवी )

देवी–जेदु महाराओ । [ जयतु महाराजः । ]

राजा–देवि ! नित्यप्रसन्नमपि ते मुखमद्यातिप्रसन्नमिव । कि ऽयं प्रहर्षः ।

देवी–णं महाराएण कहिदं–कुरङ्गीणिमित्तं दूदो आअदात्ति अइरेण जामादुअं पेक्खामि त्ति । [ ननु महाराजेन कथितं– ङ्गीनिमित्तं दूत आगत इति । तदचिरेण जामातरं प्रेक्ष इति । ]

राजा–तादृशमप्यस्ति । न तु तावत् क्रियते निश्चयः । एह्युपवि

देवी–जं महाराओ आणवेदि । [ यद् महाराज आज्ञापयति । ]

( उपविशति

राजा–देवि ! विवाहा नाम बहुशः परीक्ष्य कर्तव्या भवन्ति । कुतः,

जामातृसम्पत्तिमाचिन्तयित्वा
　　पित्रा तु दत्ता स्वमनोभिलाषात् ।
कुलद्वयं हन्ति मदेन नारी
　　कूलद्वयं क्षुब्धजला नदीव ॥ ३ ॥

अये शब्द इव । बहुभिः कारणैर्भवितव्यम् । अयं हि,

बहुत्वाद् दूरसंस्थोऽपि समीप इव वर्तते ।
सत्सु हेतुसहस्रेषु कुरङ्गयां शङ्कते मतिः ॥ ४ ॥

देवी–हं उय्याणं गआ मे दुहिआ । [ हम् उद्यानं गता मे दुहिता । ]

राजा–कोऽत्र ।

( प्रविश्य )

भटः–जयतु महाराजः । एष आर्यकौञ्जायनो निवेदयितुमागतः ।

राजा–शीघ्रं प्रवेश्यताम् ।

भटः–यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( ततः प्रविशति कौञ्जायनः । )

कौञ्जायनः–( सनिर्वेदम् ) भोः ! कष्टममात्यत्वं नाम । कुतः,

प्रसिद्धौ कार्याणां प्रवदति जनः पार्थिवबलं
　　विपत्तौ विस्पष्टं सचिवमतिदोषं जनयति ।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
　　सुसूक्ष्मं दण्डयन्ते मतिबलविदग्धाः कुपुरुषाः ॥ ५ ॥

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि—उपस्थानगृह इति । अतस्त्वशङ्कनीयेयं भूमिः । ( परिक्रम्य ससम्भ्रमम् ) प्रसीदतु प्रसीदतु स्वामी ।

राजा–अलमलं सम्भ्रमेण । स्वैरमुपविश्य कथ्यतां वृत्तान्तः ।

कौञ्जायनः–शृणोतु स्वामी । ननु स्वामिनाहमुक्तः–स्वामिदा सह गच्छोद्यानम् इति ।

राजा–एवमुक्तम् । पुनः किम् ।

कौञ्जायनः–ततो गत्वोद्यानं यथासुखमाक्रीड्य निवर्तमानायां सुतायां दासीदासहसितकथितश्रवणबृंहितमदस्रवन्मदजला नाननो निहतपतितसादितपुरुषः क्षितिरजोवगुण्ठिताव्यक्त मूर्तिर्मूर्तिमानिव पवनो दृष्टादृष्टलघुप्रचारः स्वामिसचिवानां जनयितुकाम इवैकपुरुषविशेषं प्रकाशयितुमिच्छन्निव मदा देशमभ्युपगतो हस्ती ।

राजा–तिष्ठतु विस्तरः । ननु कुशलिनी कुरङ्गी ।

कौञ्जायनः–कथमकुशलिनी भवति विद्यमानेषु स्वामिभाग्येषु

राजा–दिष्ट्या । यथेष्टमिदानीं ब्रूहि ।

कौञ्जायनः–ततः प्रद्रुतेषु प्राकृतजनेषु हाहाकारमात्रप्रती स्त्रीषु समाश्रितनिहतेषु सुपुरुषेषु उद्यानगतानां सर्वोपकरणानां क्षणाय मुहूर्तव्याक्षिप्ते मयि च नीतिगुप्ते सहसैव स्वामिदा यानमेव प्राप्तः स हस्ती ।

देवी–हं इदो वरं किण्णुखु भविस्सदि । [ हम् इतः परं कि भविष्यति । ]

राजा–अथ केन सनाथीकृता कुरङ्गी ।

कौञ्जायनः–अथ कश्चिद् दर्शनी—( इत्यर्धोक्ते तिष्ठति )

राजा–यथेष्टमिदानीं ब्रूहि । निष्परिहारा व्यापदः ।

कौञ्जायनः–अथ कश्चिद् दर्शनीयोऽप्यविस्मितस्तरुणोऽप्यन शूरोऽपि दाक्षिण्यवान् सुकुमारोऽपि बलवान् स्वामिदा हस्तिनाभिभूयमानायां तत्कालदुर्लभमभयं प्रदाय निर्विशङ्कः सादितवांस्तं द्विपवरम् ।

४

राजा—अनृणः स कारुण्यस्य । ततस्ततः ।

कौञ्जायनः—ततस्तेन सललितसरभसकरतलताडनप्ररुष्टः सहसैव स्वामिदारिकां विहाय तमेव हन्तुकामः प्रतिनिवृत्तः स व्यालः ।

देवी—कुसलो होदु । [ कुशलं भवतु । ]

राजा—ततस्ततः ।

कौञ्जायनः—अथ तदनन्तरमभ्यागतेन भूतिकेन मया च पुनर्यानमारोप्य द्रुतमानीय कन्यान्तःपुरमेव प्रवेशिता स्वामिदारिका ।

राजा—अहो महानयं प्रमादः । अथ भूतिकः किमर्थं नाभ्यागतः ।

कौञ्जायनः—उक्तोऽहं भूतिकेन—गत्वेमं वृत्तान्तं स्वामिने कथय । अहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञात्वा शीघ्रमागमिष्यामीति ।

राजा—तेन हि सर्वं परीक्ष्यागमिष्यति भूतिकः । कौञ्जायन ! कतरकुलसमुद्भूतः परव्यसनसहायः ।

कौञ्जायनः—स्वामिन् ! इह विसंवादयत्यात्मानमन्त्यजोऽहमिति ।

देवी—महाराअ ! अकुलीणो कहं एव्वं साणुक्कोसो भवे । [ महाराज ! अकुलीनः कथमेवं सानुक्रोशो भवेत् । ]

राजा—किन्नुखलु भवेदेतत् ।

( ततः प्रविशति भूतिकः । )

भूतिकः—( सविस्मयम् ) अहो प्रच्छन्नरत्नता पृथिव्याः । अस्य तावत् पुरुषस्य निर्व्याजेन विक्रमेण मन्दीभूता इव मनस्विनां विक्रमबुद्धयः । एकस्तु मे संशयः, किमर्थमात्मानमन्वयं चाच्छादयति । अथवा कः शक्तः सूर्यं हस्तेनाच्छादयितुम् । इह हि,

छन्ना भवन्ति भुवि सत्पुरुषाः कथञ्चित्
स्वैः कारणैर्गुरुजनैश्च नियम्यमानाः ।
भूयः परव्यसनमेत्य विमोक्तुकामा
विस्मृत्य पूर्वनियमं विवृता भवन्ति ॥ ६ ॥

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि–उपस्था इति । अतस्त्वशङ्कनीयेयं भूमिः । यावत् प्रविशामि । ( प्रविश्य अये अयं महाराजो देव्या सहास्ते । ( उपगम्य ) जयतु महारा

राजा–देवि ! त्वमभ्यन्तरं प्रविश्याश्वासय कुरङ्गीम् । अहमप्यनु मागमिष्यामि ।

देवी–जं महाराओ आणवेदि । [ यन्महाराज आज्ञापयति

( निष्क्रा

राजा–को वृत्तान्तस्तस्य परार्थमनवेक्षितशरीरस्य ।

भूतिकः–शृणोतु स्वामी । स मुहूर्तमनादरमत्वरितं सल प्रियवयस्येनेव तेन हस्तिना प्रक्रीड्य निवर्तनानुवर्तनगतिविशे मोह्य लज्जित इव तेन कर्मणा महाजनप्रशंसामसहमानः समः शिरस्कः स्वैरं स्वमेवावासं गतः ।

राजा–भोः ! प्रीतोऽस्मि । अयं हि मे द्वितीयो लाभः ।

भूतिकः–अथ तदनन्तरमुपलभ्य हास्तिनीभिस्तं गजवरं स ह्येमां गजशालां प्रवेश्याहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च मन्यापदेशेन गतवानस्मि ।

राजा–अथ किं कृतो निश्चयः । श्रुतमस्माभिरन्त्यज इति ।

भूतिकः–शान्तं शान्तं पापम् । नायं तादृशः । केनापि क नात्मानमन्वयं चाच्छादयति ।

राजा–अथ किं भवता परीक्षितम् ।

भूतिकः–किमत्र परीक्षितव्यम् ।

दैवं रूपं ब्रह्मजं तस्य वाक्यं
क्षात्रं तेजः सौकुमार्यं बलं च ।
यद्येवं स्यात् सत्यमस्यान्त्यजत्वं
व्यर्थोऽस्माकं शास्त्रमार्गेषु खेदः ॥ ७ ॥

राजा—किमस्त्यस्य कलत्रम् ।

भूतिकः—सर्वमस्ति । कलत्रं स्वयमनिविष्टः ।

राजा—यद्यपि स्त्रीदर्शनं परिहृतं, किमर्थं तस्य पिता न परीक्षितः ।

भूतिकः—दृष्टस्तत्रभवान् सत्पुत्रसम्पन्नः । स हि,

व्यायामस्थिरविपुलोच्छ्रितायतांसो
ज्याघातप्रचितकिणोल्वणप्रकोष्ठः ।
प्रच्छन्नोऽप्यनुकृतिलक्ष्यराजभावो
मेघान्तर्गतरविवत् प्रभानुमेयः ॥ ८ ॥

राजा—अलमेतावता प्रसङ्गेन । पुनरप्येषा परीक्षा क्रियताम् ।

भूतिकः—यदाज्ञापयति स्वामी ।

राजा—अथेदानीं काशिराजदूतं प्रति किं कर्तव्यम् ।

भूतिकः—स्वामिन् ! दूतशतान्यागतान्यागमिष्यन्ति च ।

न तत्र कर्तव्यमिहास्ति लोके
कन्यापितृत्वं बहुवन्दनीयम् ।
सर्वे नरेन्द्रा हि नरेन्द्रकन्यां
मल्लाः पताकामिव तर्कयन्ति ॥ ९ ॥

राजा—कोऽभिप्रायः ।

भूतिकः—सर्वत्र दाक्षिण्यं न कर्तव्यम् । गुणबाहुल्यं तदात्वमायातिं चावेक्ष्य त्वरतां दीर्घसूत्रतां च परित्यज्य देशकालाविरोधेन साधयितव्यं कार्यमित्यर्थः ।

राजा—युक्तमभिहितं भूतिकेन । कौञ्जायन ! किमर्थं तूष्णीं भूतः ।

कौञ्जायनः—स्वामिन् ! बहुष्वपि क्षत्रियेषु पूर्वसम्बन्धविशेषौ सौवीरराजकाशिराजौ स्वामिनो भागिनीपतित्वे तुल्यौ अस्मत्सम्बन्धयोग्याविति स्वामिना चिन्तितौ । तत्र पूर्वमेव सौवीरराजेन पुत्रस्य

कारणाद् दूतः प्रेषितः । स चास्माभिरतिबाला कन्येत्यपदेशमु सुपूजितो विसर्जितः । इदानीं तु काशिराजेन पुत्रस्य का दूतः प्रेषितः । तत्र बलाबलचिन्तायां स्वामी प्रमाणम् ।

राजा—सम्यगुक्तं कौञ्जायनेन । भूतिक ! सर्वराजमण्डल द्वयोः स्थापितयोः कं प्रति विशेषः ।

भूतिकः—न भृत्यदूषणीया राजानः, स्वामिनो हि स्वाम्यममात्या

राजा—अलमुपचारेण । ब्रूहि को निश्चयः ।

भूतिकः—इदानीं तु न प्रत्याख्यातव्यम् । स्वामिन् ! सौवी काशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ । अथ देव्या भ्र सौवीरेन्द्रो गुणाधिकः ।

राजा—न खलु भवानस्मत्सङ्कल्पानभिवादकः ।

भूतिकः—उभयथानुगृहीतोऽस्मि ।

राजा—भोः ! किन्नुखलु सौवीरेन्द्रेण पुनर्न दूतसम्पातः क्रिय

भूतिकः—तत्रास्ति मे कश्चित् सन्देहः । सुष्ठु परीक्ष्य वक्ष्यामी नोक्तवानस्मि ।

राजा—ननु कुशली तत्रभवान् ।

भूतिकः—वदन्ति चारपुरुषाः—

न दृश्यते तत्रभवान् सपुत्रः
कार्याण्यमात्याः किल वर्तयन्ति ।
न विद्यते कारणमत्र किञ्चि-
न्न लभ्यते राजकुलप्रवेशः ॥ १० ॥

राजा—भोः ! किन्नुखलु भवेदेतत् ।

कामाहतः कुमतिभिः सचिवैर्गृहीतो
रोगातुरः स्वजनरागमवेक्षते वा ।

शप्तो द्विजैर्व्रतमुपेत्य करोति शान्तिं
को वा भवेन्नरपतेर्गृहरोधहेतुः ॥ ११ ॥

शीघ्रं परीक्ष्यतामेष वृत्तान्तः ।

भूतिकः—यदाज्ञापयति स्वामी ।

राजा—कौञ्जायन ! किमिदानीं काशिराजदूतं प्रति कर्तव्यम् ।

कौञ्जायनः—एवं गते काशिराजदूतः पूजयितव्यः । बहुमुखा विवाहा यथेष्टं साध्यन्ते ।

राजा—अहो कार्यमेवापेक्षते बुद्धिरमात्यानां, न स्नेहम् ।

( नेपथ्ये )

जयतु स्वामी, जयतु महाराजः । दश नाळिकाः पूर्णाः ।

भूतिकः—स्वामिन् ! शेषमभ्यन्तरे चिन्तयिष्यामः । अतिक्रामति स्नानवेला । स्वामिदारिका चाश्वासयितव्या । महादेवी च चिरं प्रतीक्षते । महाजनोऽप्यस्मिन्नुपद्रवे स्वामिनं द्रष्टुमिच्छति ।

राजा—अहो महद्भारो राज्यं नाम । कुतः,

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥ १२ ॥

( निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

---

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति विदूषकः )

विदूषकः–भो ! ण जाणन्ति अवत्थाविसेसं इस्सरपुत्ता णाम । तत्तभवं अविमारओ इसिसावेण कुळपरिब्भंसं अन्तअकुळ अत्तणो विण्णाणं गुरुजणं च अचिन्तअन्तो जदा हत्थिसम्भ असे कुन्तिभोअदुहिआ कुरङ्गी दिट्ठा, तदप्पहुदि अण्णादिसो संवुत्तो । ही ही किं बहुणा, मए वि सह गोट्ठिं णेच्छदि, सव्व चिन्तअन्तो अहिरमदि । सच्चो खु लोअप्पवादो 'सङ्गअ अणत्थ' त्ति । को एत्थ सम्बन्धो । सा राअदारिआ अन्तज त्ति[1] । अहं पि दाव बम्हणपरिवादं परिहरन्तो ब कुळेसु परिब्भमिअ पच्छण्णो तत्तहोदो आवासं एव्व गच्छ

[ भोः न जानन्त्यवस्थाविशेषमीश्वरपुत्रा नाम । अतस्तत्रभवान् मारकः ऋषिशापेन कुलपरिभ्रंशमन्त्यजकुलप्रवासमात्मनो विज्ञानं जनं चाचिन्तयन् यदा हस्तिसम्भ्रमदिवसे कुन्तिभोजदुहिता कुरङ्गी तदाप्रभृत्यन्यादृश इव संवृत्तः । ही ही किं बहुना, मयापि सह नेच्छति, सर्वकालं चिन्तयन्नभिरमते । सत्यः खलु लोकप्रवादः ' चारिणोऽनर्था ' इति । कोऽत्र सम्बन्धः । सा राजदारिका स्वयम इति । अहमपि तावद् ब्राह्मणपरिवादं परिहरन् ब्राह्मणकुलेषु प प्रच्छन्नस्तत्रभवत आवासमेव गच्छामि । ]

( ततः प्रविशति चेटी )

चेटी–एदस्सिं अवत्थापरिब्भट्ठे राअउळे अबहुकय्यदाए पेक्खिदुं णिग्गदम्हि । ( परिक्रम्यावलोक्य ) अयि एसो अ न्तुट्ठो गच्छइ । होदु, एदेण सह हसन्ती मुहुत्तअं णिव्वे णोदेमि । (उपसृत्योर्ध्वमवलोक्य) हळा कोमुदिए ! किं ळद्धो बम्ह

1. Ganapati Śāstri reads अन्तजत्ति ( पुच्छदि ? ).

किं भणासि—ण लभामि त्ति। [एतस्मिन्नवस्थापरिभ्रष्टे राजकुलेऽबहुकार्यतया नगरं प्रेक्षितुं निर्गतास्मि । अयि एष आर्यसन्तुष्टो गच्छति । भवतु, एतेन सह हसन्ती मुहूर्तकं निर्वेदं विनोदयामि । हला ! कौमुदिके ! किं लब्धो ब्राह्मणः । किं भणसि—न लभ इति । ]

विदूषकः—चन्दिए ! किं एदं । [ चन्द्रिके ! किमेतत् । ]

चेटी—अय्य ! कञ्चि बम्हणं अण्णेसामि । [ आर्य ! कञ्चिद् ब्राह्मणमन्विष्यामि । ]

विदूषकः—बम्हणेण किं कय्यं ! [ ब्राह्मणेन किं कार्यम् । ]

चेटी—किमण्णं, भोअणत्थं णिमन्तेदुं । [ किमन्यद्, भोजनार्थं निमन्त्रयितुम् । ]

विदूषकः—भोदि ! अहं को, समणओ । [ भवति ! अहं कः, श्रमणकः ।

चेटी—तुवं किल अवेदिओ । [ त्वं किलावैदिकः । ]

विदूषकः—किस्स अहं अवेदिओ । सुणाहि दाव । अत्थि रामाअणं णाम णट्टसत्थं । तस्सिं पञ्च सुलोआ असम्पुण्णे संवच्छरे मए पठिदा । [ कस्मादहमवैदिकः । श्रृणु तावत् । अस्ति रामायणं नाम नाट्यशास्त्रम् । तस्मिन् पञ्च श्लोका असम्पूर्णे संवत्सरे मया पठिताः ।]

चेटी—जाणामि जाणामि । अय्यस्स कुलोइदो ईदिसो मेधाविभावो । [ जानामि जानामि । आर्यस्य कुलोचित ईदृशो मेधाविभावः । ]

विदूषकः—ण केवलं सुलोआ एव, तेसं अत्थो वि मुणिओ । अण्णं च । अवरो विसेसो, बम्हणो दुल्लहो अक्खरज्ञो अत्थज्ञो अ । [ न केवलं श्लोका एव, तेषामर्थोऽपि ज्ञातः । अन्यच्च । अपरो विशेषः, ब्राह्मणो दुर्लभोऽक्षरज्ञोऽर्थज्ञश्च । ]

चेटी—तेण हि भणाहि किं णाम एदं अक्खरं । (नाममुद्रिकां दर्शयति) [ तेन हि भण किं नामैतदक्षरम् । ]

विदूषकः–( आत्मगतम् ) अजाणमाणो किं भणिस्सं। ( वि
भोदु दिट्ठं। एवं दाव भणिस्सं। (प्रकाशम्) भोदि!
अक्खरं मम पुत्थए णत्थि। [ अजानानः किं भणिष्यामि।
दृष्टम्। एवं तावद् भणिष्यामि। भवति! एतदक्षरं मम पुस्तके ना

चेटी–जदि ण जाणासि, अदक्खिणं भुञ्जेहि। [ यदि न जा
अदक्षिणं भुङ्क्ष्व। ]

विदूषकः–भोदु भोदु। [ भवतु भवतु। ]

चेटी–पेक्खामि दाव अय्यस्स अङ्गुळीअअं। [ पश्यामि ता
स्याङ्गुलीयकम्। ]

विदूषकः–पेक्ख पेक्ख ममकेरअं दंसणीअं। [ पश्य पश्य
दर्शनीयम्। ]

चेटी–( गृहीत्वा ) एसो भट्टिदारओ इदो एव्व आअच्छदि।
भर्तृदारक इत एवागच्छति। ]

विदूषकः–( परावृत्यावलोक्य ) कहिं कहिं तत्तभवं। [ कुत्र कु
भवान् ]

चेटी–विळोभिदो मुद्धबम्हणो। इमं जणसमूहं पविसिअ
हमग्गे वञ्चिअ गमिस्सं। ( निष्क्रान्ता ) [ विलोभितो मुग्धब्रा
इमं जनसमूहं प्रविश्य चतुष्पथमार्गे वञ्चयित्वा गमिष्यामि। ]

विदूषकः–( सर्वतो विलोक्य ) चान्दिए! चान्दिए! कहिं कहिं
आ। हा वञ्चिदो म्हि। गण्डभेददासीए सीळं जाणन्तो वि
भोअणविस्सम्भेण छळिदो म्हि। ( परिक्रम्य ) भोअणं वि
चिन्तेमि। ( अग्रतो विलोक्य ) हन्त एसा धावइ। चिट्ठ चि
धम्मिट्ठदासि! चिट्ठ। किं धावइ एव। जाव अहं वि धा
( धावति। ) मम पादा सिविणे हत्थिणा आसादिअमाणस्स
तहिं तहिं एव्व पडन्ति। हन्त कुम्भदासीए वुत्तन्तं त

णिवेदइस्सं । [ चन्द्रिके ! चन्द्रिके ! कुत्र कुत्र चन्द्रिका । हा वञ्चितोऽस्मि । गण्डभेददास्याः शीलं जानन्नप्यात्मनो भोजनविस्रम्भेण च्छलितोऽस्मि । भोजनमप्यलीकं चिन्तयामि । हन्तैषा धावति । तिष्ठ तिष्ठ अधर्मिष्ठदासि ! तिष्ठ । किं धावत्येव । यावदहमपि धावामि । मम पादौ स्वप्ने हस्तिनासाद्यमानस्येव तत्र तत्रैव पततः । हन्त कुम्भदास्या वृत्तान्तं तत्रभवते निवेदयिष्यामि । ]

( निष्क्रान्तः )

प्रवेशकः ।

---

( ततः प्रविशत्युपविष्टोऽविमारकः । )

अविमारकः—

अद्यापि हस्तिकरशीकरशीतलाङ्गीं
　बालां भयाकुलविलोलविषादनेत्राम् ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
　जातिस्मरः प्रथमजातिमिव स्मरामि ॥ १ ॥

अहो बलमनङ्गस्य । कुतः,

दृष्टिस्तदाप्रभृति नेच्छति रूपमन्यद्
　बुद्धिः प्रहृष्यति विषीदति च स्मरन्ती ।
पाण्डुत्वमेति वदनं तनुतां शरीरं
　शोकं व्रजामि दिवसेषु निशासु मोहम् ॥ २ ॥

अथवा अयुक्तमधृतित्वं पुरुषाणाम् । सङ्कल्पमानो हि विजृम्भते मदनः । तस्मादहमिदानीं न सङ्कल्पयामि । ( स्मृत्वा ) अहो तस्या रूपसम्पद्, रूपानुरूपं यौवनं, यौवनसदृशं सौकुमार्यम् अत्र हि,

प्रतिच्छन्दं धात्रा युवतिवपुषां किन्नु रचितं
गता वा स्त्रीरूपं कथमपि च ताराधिपरुचिः ।
विहाय श्रीः कृष्णं जलशयनसुप्तं कृतभया
धृतान्यस्त्रीरूपं क्षितिपतिगृहे वा निवसति ॥

कथमहं पुनरारब्धश्चिन्तयितुम् । किमिदानीं करिष्ये । तावदस्मदिच्छया न प्रवर्तते । इह हि,

प्रतिषिद्धं प्रयत्नेन क्षणमात्रं न वीक्षते ।
चिराभ्यस्तपथं याति शास्त्रं दुर्गुणितं यथा ॥ ४ ॥

अथवा न शक्यं मनो जेतुम् । चिन्तयिष्याम्येनाम् । सर्वेषां स्त्रीगुणानामेकत्र समवायः । ( चिन्ताभिभूत उपविश

( ततः प्रविशति धात्री नलिनिका च । )

धात्री–( सवितर्कम् ) अहो सङ्कडदा कय्यस्स । जइ एवं क राअउळं दूसिअं होइ । जदि ण करीअदि, अवस्सं सा वि मए अणेएहि उवाएहि विआरिदं च । मम वि सा पच्छादेदि । अहव किं ताए पच्छादिदं । सा तदप्पहुदि वण्णअं णेच्छदि, आहारं णाभिळसदि, ण रमदि गोट्ठि दिग्घं णिस्ससदि, असम्बद्धं कहेदि, कहिदं ण जाणादि हसदि, विवित्ते रोदिदि, रोअं अवदिसदि, तणुआ पण्डुभावं गच्छदि । एकं पि तहिं अच्छरिअं । एवं अवत्थाविसेसेहि अत्तणो ळज्जाए भएण कुळमाणेण बा अ एकस्सा वि किञ्चि ण मन्तेदि । [ अहो सङ्कटता क यद्येवं क्रियते, राजकुलं दूषितं भवति । यदि न क्रियतेऽ विपद्यते । मयानेकैरुपायैर्विचारितं च । ममापि साद्यापि प्रच्छा अथवा किं तया प्रच्छादितम् । सा तदाप्रभृति सुमनावर्णकं

१ ‘ अआरणं णि ’.

१४

आहारं नाभिलषति, न रमते गोष्ठीजनेन, दीर्घं निःश्वसिति, असम्बद्धं कथयति, कथितं न जानाति, गूढं हसति, विविक्ते रोदिति, रोगमपदिशति, तन्वी भवति, पाण्डुभावं गच्छति । एकमपि तत्राश्चर्यम् । एवंविधैरवस्थाविशेषैरात्मनो लज्जया भयेन कुलमानेन बालभावेन च एकस्या अपि किञ्चिन्न मन्त्रयते । ]

नलिनिका—किस्स ण मन्तेदि । मम सव्वं कहेदि । [ कस्मान्न मन्त्रयते । मम सर्वं कथयति । ]

धात्री—हळा ! जाणामि दे अभिप्पाअं, अवत्थं जाणिअ सव्वहा इमं एदेण जोजेहि त्ति । [ हला ! जानामि तेऽभिप्रायम्, अवस्थां ज्ञात्वा सर्वथेमामेतेन योजयेति । ]

नलिनिका—किंणुखु ईदिसो तादिसेहि गुणविसेसेहि अकुळीणो भवे । [ किन्नुखल्वीदृशस्तादृशैर्गुणविशेषैरकुलीनो भवेत् । ]

धात्री—तहिं च सन्देहो । सुदं च मए भट्टिणीए समीवे अमच्चेहि किल भणिदं—ण सो तादिसो दुक्खुळजो त्ति । अत्ताणं केण वि कारणेण पच्छादेदि त्ति । [ तत्र च सन्देहः । श्रुतं च मया भट्टिन्याः समीपेऽमात्यैः किल भणितं—न स तादृशः दुष्कुलज इति । आत्मानं केनापि कारणेन प्रच्छादयतीति । ]

नलिनिका—कोणुखु भवे । [ कोनुखलु भवेत् । ]

धात्री—जदि सो सन्देहो णत्थि, को अण्णो अदिरित्तगुणो जामादुओ भवे । [ यदि स सन्देहो नास्ति, कोऽन्योऽतिरिक्तगुणो जामाता भवेत् । ]

( नेपथ्ये )

यदि च विभवरूपज्ञानसत्त्वादयः स्यु-
र्न तु कुलविकलानां वर्तते वृत्तशुद्धिः ।
ध्रुवमिह कुलमस्य श्रोष्यसि प्राप्तकाले
त्यज कुलगतशङ्कां साध्यतां स्वन्तमेतत् ॥ ५ ॥

धात्री–हळा ! केण खु भणिदं । [ हला ! केन खलु भणितम्

नलिनिका–एत्थ को[1] वि ण दिस्सदि । [ अत्र कोऽपि न दृश्य

धात्री–पहिट्ठरोमकूवं मे सरीरं । असंसअं दव्वेण भणिदं पुण जाणामि ण एसो केवळो माणुसात्ति । [ प्रहृष्टरोमकूपं मे शरी असंशयं दैवेन भणितम् । अहं पुनर्जानामि नैष केवलो मानुष इ

नलिनिका–गदो तस्स कुळसन्देहो । अम्हाणं वअणं को करेदि त्ति चिन्तेमि । ( विचिन्त्य ) धण्णो खु सो जणो इ उम्मादेदि । किं बहुणा, सअं कामदेवो वि भट्टिदारिआए पेक्खिअ किळिस्सिदि । तेण सो वि किळिस्सिदि त्ति तक्के [ गतस्तस्य कुलसन्देहः । अस्माकं वचनं करोति न करोतीति चिन्तय धन्यः खलु स जन इममेवमुन्मादयति । किं बहुना, स्वयं देवोऽपि भर्तृदारिकाया रूपं प्रेक्ष्य क्लिश्यते । तेन सोऽपि क्लिश्यत तर्कयामि । ]

धात्री–हळा ! एसो तस्स आवासो, जं तदा हत्थिसम्भमदि कोदूहळेण आअदम्ह । [ हला ! एष तस्यावासः; यं तदा सम्भ्रमदिवसे कौतूहलेनागते स्वः । ]

नलिनिका–हळा ! अहो दस्सणीअं किदोवहारं च दुवार हळा ! एहि पविसामो । [ हला ! अहो दर्शनीयं कृतोपहारं च मुखम् । हला ! एहि प्रविशावः । ]

धात्री–हळा ! कहिं भट्टिदारओ । किं भणासि–चउस्साळे त्ति । ( परिक्रम्यावलोक्य ) अअं अम्हाणं भट्टिदारओ एको ए वि चिन्तअन्तो चिट्ठइ । [ हला ! कुत्र भर्तृदारकः । किं भ चतुःशाले वर्तत इति । अयमस्माकं भर्तृदारक एक एव चिन्तयंस्तिष्ठति । ]

---

१ 'कोच्चि ण'.

नलिनिका–हळा ! णं पविसामो । [ हला ! ननु प्रविशावः । ]

धात्री–एवं करेम्ह । ( प्रविश्य ) सुहं अय्यस्स । [ एवं कुर्वः । सुखमार्यस्य । ]

अविमारकः–अहो तस्या रूपसम्पत् ।

धात्री–( साकुलम् ) किण्णुहु भवे । सुहं अय्यस्स । [ किन्नुखलु भवेत् । सुखमार्यस्य । ]

अविमारकः–

उर: स्तनतटालसं जघनभारखिन्ना तनुः

धात्री–अम्मो विप्पळवदि । [ अम्मो विप्रलपति । ]

अविमारकः–

मुखं नयनवल्लभं प्रकृतिताम्रबिम्बाधरम् ।

धात्री–धण्णो खु सो जणो इमं एवं उम्मादेदि । [ धन्यः खलु स जन इममेवमुन्मादयति । ]

अविमारकः–

भयेऽपि यदि तादृशं नयनपात्रपेयं वपुः

धात्री–सुत्थिदं कय्यं । [ सुस्थितं कार्यम् । ]

अविमारकः–

कथन्नु सुरतान्तरप्रचुरविभ्रमं तद् भवेत् ॥ ६ ॥

धात्री–सा एव इमं उम्मादेदि । [ सैवेममुन्मादयति । ]

नलिनिका–सुट्ठु भणिदं–एसो वि किळिस्सिदि त्ति । [ सुष्ठु भणितम्-
३ एषोऽपि क्लिश्यत इति । ]

धात्री–सुट्ठु विञ्ञादं तुए । सुहं अय्यस्स । [ सुष्ठु विज्ञातं त्वया । सुखमार्यस्य । ]

६ अविमारकः–( विलोक्य सव्रीडम् ) स्वागतं भवतीभ्याम् ।

उभे–अवि सुहं । [ अपि सुखम् । ]

अविमारकः–भविष्यति वां दर्शनेन ।

धात्री–अय्य ! किं चिन्तीअदि । [ आर्य ! किं चिन्त्यते । ]

अविमारकः–भवति ! शास्त्रं चिन्त्यते ।

धात्री–किं णाम एदं रमणीअं सत्थं विवित्थे चिन्तीअदि । [ नामैतद् रमणीयं शास्त्रं विविक्ते चिन्त्यते । ]

अविमारकः–भवति ! योगशास्त्रं चिन्त्यते ।

धात्री—( सस्मितम् ) पडिग्गहिदं मङ्गळवअणं जोअसत्थं [...] होदु । [ प्रतिगृहीतं मङ्गलवचनम् । योगशास्त्रमेव भवतु । ]

अविमारकः– ( आत्मगतम् ) कोनुखलु वाक्यार्थः । अन्यदर्था[...] लाषवशादन्यथा सङ्कल्पयामि । ( प्रकाशम् ) किमभिप्रेतं भवत[...]

धात्री–जोअं इच्छन्तीओ आअदम्ह । अणुमदो अय्येण जोओ [...] णं णिट्ठिदं कय्यं अम्हाअं राअउळे विवित्ते अवआसे[1] । तहिं [...] को वि जणो अहिअदरं जोअं चिन्तअन्तो अच्छदि । तेण [...] तहिं एव अय्येण सुट्ठु जोअविहाणं चिन्तीअदु त्ति । [ यो[...] च्छन्त्यावागते स्वः । अनुमत आर्येण योग इति ननु निष्ठितं [...] मस्माकं राजकुले विविक्त अवकासे । तत्रापि कोऽपि जनोऽधिकतरं [...] चिन्तयन्नास्ति । तेन सह तत्रैवार्येण सुष्ठु योगविधानं चिन्त्यतामि[...]

अविमारकः–कथमद्यापि सावशेषाणि मे भाग्यानि । (आसनादु[...] भवति ! पुनर्दत्ता इव मे प्राणाः । कुतः,

तस्या भयाकुलितदृष्टिविषं मनोज्ञं
सौम्यप्रकारमतितीक्ष्णमवेक्ष्य वक्त्रम् ।
उन्मादमभ्युपगतोऽस्मि चिरं[2] भवत्यो-
र्वाक्यामृतेन पुनरद्य कृतः ससंज्ञः ॥ ७ ॥

१ आवासे. २ पुनर्भवत्या.

धात्री–दिट्ठिआ अय्येण परिपालिदो अअं जणो । अळमदिप्पसङ्गेण । अज्ज एव्व पविसिदव्वं कण्णाउरं । अमच्चो अय्यभूदिओ कण्णाउररक्खओ कासिराअदूदेण सह अम्हाअं महाराएण पूइदो पत्थिदो अ । [ दिष्ट्यार्येण परिपालितोऽयं जनः । अलमतिप्रसङ्गेन । अद्यैव प्रवेष्टव्यं कन्यापुरम् । अमात्य आर्यभूतिकः कन्यापुररक्षकः काशिराजदूतेन सहास्माकं महाराजेन पूजितः प्रस्थितश्च । ]

अविमारकः–बाढम् । प्रथमः कल्पः । भवति ! कस्तावदौषधमुपलभ्य मन्दीभवत्यातुरः ।

धात्री–पवेसमत्तं एव्व दुळ्ळहं । सक्कं अब्भन्तरे चिरं वसिदुं । [ प्रवेशमात्रमेव दुर्लभम् । शक्यमभ्यन्तरे चिरं वस्तुम् । ]

अविमारकः–प्रविष्ट एवाहं चिन्तयितव्यः । क्रियतामनर्गलविशाला प्रासादमाला ।

धात्री–एवं करेम्ह । सव्वं अब्भन्तरकरणीअं संपादेम्ह । अप्पमत्तो एव पविसदु अय्यो । [ एवं कुर्वः । सर्वमभ्यन्तरकरणीयं संपादयावः । अप्रमत्त एव प्रविशत्वार्यः । ]

अविमारकः–भवति ! सकृदभिधीयतां राजकुलस्य विधानम् ।

धात्री–एवं विअ । [ एवमिव । ]

अविमारकः–हन्त भोः !

श्रुत्वा तु राज्ञो गृहसंविधानं
प्रविष्टमात्मानमवैति बुद्धिः ।
न पौरुषं वै परदूषणीयं
न चेद् विसंवादमुपैति दैवम् ॥ ८ ॥

( विचिन्त्य ) भवति ! कोऽस्माकमस्मिन् कार्ये प्रत्ययः ।

उभे–अअं पच्चओ । जेदु भट्टिदारओ । [ अयं प्रत्ययः । जयतु भर्तृदारकः । ]

अविमारकः—हन्त गम्यतां सम्प्रति । प्रतीक्ष्यतामर्धरात्रम् ।

उभे—जं भट्टिदारओ आणवेदि (निष्क्रान्ते) [ यद् भ आज्ञापयति । ]

(ततः प्रविशति विदूषकः ।)

विदूषकः—अहो णअरस्स सोहा संपदि । अत्थं आस भअवं सुय्यो दीसइ दहिपिण्डपण्डरेसु पासादेसु अग ळिन्देसु पसारिअगुळमहुरसङ्गदो विअ । गणिअ णाअरिअजणो अ अण्णोण्णविसेसमण्डिदा अत्ताणं कामा तेसु तेसु पासादेसु सविब्भमं सञ्चरन्ति । अहं तु साणि पेक्खिअ उम्मादिअमाणस्स तत्तहोदो रत्तिसहाओ हो णअरादो णिग्गदो म्हि । सो वि दाव अम्हाअं अधण्णदाए अणत्थसञ्चिन्तणेण अण्णादिसो विअ संवुत्तो । एदं त आवासगिहं । अज्ज णअरापणाळिन्दे सुणामि तत्तहोदो णिग्गदा राअदारिआए धत्ती सही आत्ति । किंणुखु एत्थ अहव हत्थिहत्थचञ्चळाणि पुरुसभग्गाणि होन्ति । अहव अणत्थो अम्हाअं । अवत्थासदिसं राअउळं पविसामि । ( ही ही एसो अत्तभवं कामुअजणवण्णएण अणुळित्तो विअ भावेण इदो एव आअच्छदि । अहव सव्वं अळङ्कारो सुरूवाणं । (उपेत्य) जेदु भवं । [ अहो नगरस्य शोभा स अस्तमासादितो भगवान् सूर्यो दृश्यते दधिपिण्डपाण्डरेषु प्रास ग्रापणालिन्देषु प्रसारितगुलमधुरसङ्गत इव । गणिकाजनो नाग श्चान्योन्यविशेषमण्डितावात्मानं दर्शयितुकामौ तेषु तेषु प्रासादेषु स संचरतः । अहं तु तादृशानि प्रेक्ष्योन्माद्यतस्तत्रभवतो रा भवामीति नगरान्निर्गतोऽस्मि । सोऽपि तावदस्माकमधन्यतया नर्थसंचिन्तनेनान्यादृश इव संवृत्तः । एतत् तत्रभवत आवास

अद्य नगरापणालिन्दे शृणोमि तत्रभवतो गृहान्निर्गता राजदारिकाया धात्री सखी चेति । किंनुखल्वत्र कार्यम् । अथवा हस्तिहस्तचञ्चलानि पुरुषभाग्यानि भवन्ति । अथवा गच्छत्वनर्थोऽस्माकम् । अवस्थासदृशं राजकुलं प्रविशामि । ही ही एषोऽत्रभवान् कामुकजनवर्णकेनानुलिप्त इव पाण्डुभावेनेत एवागच्छति । अथवा सर्वमलङ्कारो भवति सुरूपाणाम् । जयतु भवान् । ]

अविमारकः—वयस्य ! अतिविलम्बितमिव भवता नगरे ।

विदूषकः—तुमं दाव आमन्तणाविप्पलद्धो विअ वम्हणो अहोरत्तं चिन्तेसि । अहं पि दाव दिअसे णअरं परिब्भमिअ अलद्धभोआ पाअडगणिआ विअ रत्तिं पस्सदो सइदुं आअच्छामि । [ त्वं तावदामन्त्रणविप्रलब्ध इव ब्राह्मणोऽहोरात्रं चिन्तयसि । अहमपि तावद् दिवसे नगरं परिभ्रम्यालब्धभोगा प्राकृतगणिकेव रात्रौ पार्श्वतः शयितुमागच्छामि । ]

अविमारकः—सखे ! प्रियं ते कथयिष्यामि ।

विदूषकः—किं समत्तो अम्हाअं इसिसावो । [ किं समाप्तोऽस्माकमृषिशापः । ]

अविमारकः—मूर्ख ! अवश्यं भवितव्येऽर्थे कः प्रहर्षः ।

विदूषकः—किं पुण अण्णं । [ किं पुनरन्यत् । ]

अविमारकः—किं न दृष्टा कुरङ्गया धात्री नलिनिका च ।

विदूषकः—आम भो ! दिट्ठाओ तत्तहोदीओ । किं आणीदं । [ आम भोः ! दृष्टे तत्रभवत्यौ । किमानीतम् । ]

अविमारकः—अस्मच्छोकौषधमानीतम् ।

विदूषकः—पेक्खामि दाव । [ पश्यामि तावत् । ]

अविमारकः—काले द्रक्ष्यसि । अद्य तावच्छ्रूयताम् ।

विदूषकः—भणादु भणादु भवं । [ भणतु भणतु भवान् । ]

अविमारकः–किं बहुना । तत्रभवती ब्रवीति अद्यैव प्रवेष्टव्यं पुरमिति ।

विदूषकः–( विहस्य ) केण खु उवाएण अब्भन्तरं पविसिअ गग्गहणं पत्तुकामोऽसि । अमच्चा णाम विसमसीळा कुन्तिभोअस्स । [ केन खलूपायेनाभ्यन्तरं प्रविश्य जीवग्रहणं प्राप्तुकामोऽसि । अमात्या नाम विषमशीलाः कुंतिभोजस्य । ]

अविमारकः–कथं भवतापि शङ्कनीयम् । पश्य,

भग्ना मयैकेन पराः ससैन्या
अद्यापि गन्धेन न संश्रयन्ते ।
किं मानुषैः सोऽप्यसुरेश्वरो मे
हतो भुजाभ्यामविरूपधारी ॥ ९ ॥

विदूषकः–जाणामि जाणामि भवदो अमाणुसाणि कम्माणि । सव्वहा सङ्कणीओ रत्तिच्छण्णो परगिहप्पवेसो । [ जानामि जानामि भवतोऽमानुषाणि कर्माणि । सर्वथा शङ्कनीयो रात्रिच्छन्नः परगृहप्रवेशः । ]

अविमारकः–एष समासः । सर्वथा प्रवेष्टव्यं कुन्तिभोजस्य पुरम् । तदनुमन्तुमर्हति महाब्राह्मणः ।

विदूषकः–कहं मं उज्झिअ गच्छसि । अहं भवन्तं सव्वकालं ण मुञ्चामि । अक्कोसन्तो वि एक्को इच्छिदव्वो । [ कथं मामुज्झित्वा गच्छसि । अहं भवन्तं सर्वकालं न मुञ्चामि । आक्रोशन्नप्येक एष्टव्यः । ]

अविमारकः–न जानाति भवान् शास्त्रमार्गम् ।

एकः परगृहं गच्छेद् द्वितीयेन तु मन्त्रयेत् ।
बहुभिः समरं कुर्यादित्ययं शास्त्रनिर्णयः ॥ १० ॥

२२

तस्मादेकेनैव मया प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम्। न ते वयं शङ्कनीयाः । पश्यतु भवान् ,

मितगुणमिह कुन्तिभोजसैन्यं
नृपभवनं विभवैः सुखं प्रवेष्टुम् ।
वयमपि च भुजायुधप्रधानाः
किमिह सखे ! भवतापि शङ्कनीयाः ॥ ११ ॥

विदूषकः–जइ एवं किदो णिच्चओ, संपदि णअरं पविसामो । तहिं मम अत्थि मित्तो। तस्स आवासे काळं पडिवाळम्ह । [ यद्येवं कृतो निश्चयः, संप्रति नगरं प्रविशावः । तत्र ममास्ति मित्रम्। तस्यावासे कालं प्रतिपालयावः । ]

अविमारकः–सम्यग् भवानाह । साम्प्रतमभ्यन्तरं प्रविश्य कृताह्निको महाराजेनाभ्यनुज्ञातो वासगृहे शयनसंविधानं प्रविश्याज्ञातो नगरं प्रविश्य भवतो मित्रगृहे कालं प्रतिपालयामि ।

( प्रविश्य )

चेटी–जेदु भट्टिदारओ। आवुत्तं ह्णाणोदअं । [ जयतु भर्तृदारकः । आवृत्तं स्नानोदकम् । ]

अविमारकः–अयमयमागच्छामि । गच्छाग्रतः ।

चेटी–जं भट्टिदारओ आणवेदि । ( निष्क्रान्ता ) [ यद् भर्तृदारक आज्ञापयति । ]

अविमारकः–वयस्य ! अस्तमितो भगवान् दिवाकरः । सम्प्रति हि–

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा ।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम् ॥ १२ ॥

विदूषकः–सुट्ठु भवं भणादि । अदिक्कन्दो दिअसो । पओसो । [ सुष्ठु भवान् भणति । अतिक्रान्तो दिवसः । प्रदोषः । ]

अविमारकः–अहो विचित्रस्वभावता जगतः । कुतः ।

श्यामृष्टसूर्यतिलको विततांडुमालो
नष्टातपो मृदुमनोहरशीतवातः ।
संलीनकामुकजनः प्रविकीर्णशूरो
वेषान्तरं रचयतीव मनुष्यलोकः ॥ १३ ॥

( निष्क्रान्तौ )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति कुरङ्गी चेट्यौ च )

कुरङ्गी–हळा ! किं तेण भणिअं । [ हला ! किं तेन भणितम्

चेटी–भट्टिदारिए ! केण । [ भर्तृदारिके ! केन । ]

कुरङ्गी–( स्वगतम् ) हं भिन्दामि खु मन्दभाआ । ( प्रक कण्णेउरचेडेण । [ हं भिनद्मि खलु मन्दभागा । कन्यापुरचेटेन

मागधिका–दिट्ठो मए कण्णेउरचेडो । भणिदं च । ण किञ्चि [ दृष्टो मया कन्यापुरचेटः । भणितं च । न किञ्चिदाह । ]

कुरङ्गी–हन्त भट्टिणीए णिवेदेमि—कण्णेउरचेडो मम सु ण करेदि त्ति [ हन्त भट्टिन्यै निवेदयामि — कन्यापुरचेटो मम पञ्जरं न करोतीति । ]

मागधिका–णं णिट्ठिदो सुअपञ्जरो भट्टिदारिए । [ ननु शुकपञ्जरो भर्तृदारिकायाः । ]

कुरङ्गी–वाचाडे ! किं अण्णो वि अत्थि । [ वाचाटे ! किमन्योऽप्यस्ति । ]

मागधिका–भोदव्वं । [ भवितव्यम् । ]

कुरङ्गी–हळा ! का वेळा । [ हला ! का वेला । ]

मागधिका–ओगाहो पओसो । [ अवगाढः प्रदोषः । ]

कुरङ्गी–तेण हि पासादं आलुहामो । [ तेन हि प्रासादमारोहामः । ]

मागधिका–विळासिणि ! अग्गदो जाहि । विरएहि सअणासणाणि । [ विलासिनि ! अग्रतो याहि । विरचय शयनासनानि । ]

विलासिनी–सुत्ता खु तुवं । को काळो विरइदाणि सअणासणाणि । [ सुप्ता खलु त्वम् । कः कालो विरचितानि शयनासनानि । ]

मागधिका–हळा ! जाणामि दे अळसत्तणं । दिवसरइदाणि भणासि रइदाणि त्ति । [ हला ! जानामि तेऽलसत्वम् । दिवसरचितानि भणासि रचितानीति । ]

विलासिनी–हळा ! मा एव्वं भणाहि । भट्टिदारिअं अन्तरेण अण्णादिसाणि होन्ति । [ हला ! मैवं भण । भर्तृदारिकामन्तरेणान्यादृशानि भवन्ति । ]

मागधिका–हळा ! गदुअ जाणामि । [ हला ! गत्वा जानामि । ]

( सर्वाः परिक्रामन्ति । )

मागधिका–एसो पासादो । [ एष प्रासादः । ]

कुरङ्गी–अग्गदो जाहि । (आरोहणं नाटयति । ) [ अग्रतो याहि । ]

मागधिका–साहु विळासिणि ! साहु । अत्तणो णामसदिसं किदं । एदस्सिं सिळादळे रइदं सअणं । [ साधु विलासिनि ! साधु । आत्मनो नामसदृशं कृतम् । एतस्मिन् शिलातले रचितं शयनम् । ]

विलासिनी–अब्भन्तरमण्डवे खु रइदं सअणं । मागधिए ! पेक्ख पेक्ख मे अळसत्तणं । [अभ्यन्तरमण्डपे खलु रचितं शयनम् । मागधिके ! पश्य पश्य मेऽलसत्वम् । ]

मागधिका–अदिपण्डिदा खु संवुत्ता । एवं पण्डितचेडवु ळभेहि । [ अतिपण्डिता खलु संवृत्ता । एवं पण्डितचे लभस्व । ]

कुरङ्गी–हळा ! इमस्सिं सिळादळे मुहुत्तअं उवविसामि । अस्मिन् शिलातले मुहूर्तकमुपविशामि । ]

मागधिका–जं भट्टिदारिआए रुइदं । होदु । [ यद् भ रुचितम् । भवतु । ]

( सर्वा उपविशन्ति )

मागधिका–भट्टिदारिए ! कहेमि वक्खाणं । [ भर्तृदारि यामि व्याख्यानम् । ]

कुरङ्गी–हळा ! जाणामि दे असम्बद्धप्पळावं । [ हला! तेऽसंबद्धप्रलापम् । ]

मागधिका–भट्टिदारिए ! अभिणवा खु कहा । [ भ अभिनवा खलु कथा । ]

कुरङ्गी–याचेमि, मा णिब्बन्धिअ, मुहूत्तअं सआमि । [ निर्बध्य, मुहूर्तकं शये । ]

विलासिनी–सुहं सइदु भट्टिदारिआ । मे कहेहि । [ सु भर्तृदारिका । मम कथय । ]

कुरङ्गी–( आत्मगतम् ) किंणुखु भवे । [ किंनुखलु भवेत् ।

मागधिका–हळा ! सुणाहि भट्टिदारिअं अन्तरेण । [ ह भर्तृदारिकामन्तरेण । ]

कुरङ्गी–हं विदिदं रहस्सं । परिब्भट्ठम्हि । [ हं विदितं परिभ्रष्टास्मि । ]

विलासिनी–हळा ! कहिं तुए सुदं । [ हला ! कुत्र त्वया

मागधिका–भट्टिणीपरिचारिआए वसुमित्ताए कहिदं । [ परिचारिकया वसुमित्रया कथितम् । ]

विलासिनी–सअं णाम भट्टिणीए कहिदं होदि । [ स्वयं नाम भट्टिन्या कथितं भवति । ]

मागधिका–अत्थि कासिराअपुत्तो जअवम्मा णाम । तस्स दिण्णा भट्टिदारिआ । तस्स अ दूदो आअदो महाराएण पूइदो । पडिग्गहिदं च वण्णिआरं । [ अस्ति काशिराजपुत्रो जयवर्मा नाम । तस्मै दत्ता भर्तृदारिका । तस्य च दूत आगतो महाराजेन पूजितः । प्रतिगृहीतं च वर्णिकारम् । ]

कुरङ्गी–( आत्मगतम् ) एदं अळिअं । अहं अत्तणो पभवामि । [ एतदलीकम् । अहमात्मनः प्रभवामि । ]

मागधिका–तहिं किळ भट्टिणीए भणिदं—बाळा खु मे दुहिआ, ण सक्कुणोमि एक्कं पि दिअसं अपेक्खन्ती जीविउं । जदि मे महाराओ पसण्णो, एत्थ एव्व जामादुओ आणीदव्वो त्ति । [ तत्र किल भट्टिन्या भणितं–बाला खलु मे दुहिता, न शक्नोम्येकमपि दिवसमपश्यन्ती जीवितुम् । यदि मे महाराजः प्रसन्नः, अत्रैव जामाताऽनेतव्य इति । ]

विलासिनी–तदो तदो । [ ततस्ततः । ]

मागधिका–तदो तं पि किळ अणुमदं महाराएण । अज्ज णक्खत्तं सोभणं त्ति तेण अ दूदेण अमच्चो अय्यभूदिओ पत्थिदो । [ ततस्तदपि किलानुमतं महाराजेन । अद्य नक्षत्रं शोभनमिति तेन च दूतेनामात्य आर्यभूतिकः प्रस्थितः । ]

कुरङ्गी–( स्वगतम् ) हन्त काळन्तरिदं कय्यं । [ हन्त कालान्तरितं कार्यम् । ]

विलासिनी–पिअं भट्टिदारिआए रूवजोव्वणं सफळं संवुत्तं त्ति । [ प्रियं भर्तृदारिकाया रूपयौवनं सफलं संवृत्तमिति । ]

( प्रविश्य )

नलिनिका–भणिदं हि मम मादाए–गच्छ एदं वुत्तन्तं भ आए कहेहि । पिअणिवेदिअमाणाणि पिआणि पि होन्ति । अह अ सा वि मं पेक्खन्ती सव्वं विस्सत्थं ण अहं पि काले पस्सदो पभवामि त्ति । जाव भट्टिदारिआ णिवेदेमि । ( परिक्रामति ) [भणितं हि मम मात्रा–गच्छै भर्तृदारिकायै कथय । प्रियनिवेद्यमानानि प्रियाणि प्रियतराणि अथ च सापि मां पश्यन्ती सर्वं विश्वस्तं न भणति । अहम पार्श्वत: प्रभवामीति यावद् भर्तृदारिकायै प्रियं निवेदयामि।

कुरङ्गी–कोणुखु अभूदपूव्वो रोओ चिन्तिअमाणो मं उम सुमणावण्णअं णेच्छदि । ण तुस्सदि गोट्ठीए । इदं एत्थ मणोहरं च । (निःश्वस्य) णळिणिए ! किं एदं । [कोनुखल रोगश्चिन्त्यमानो मामुन्मादयति । सुमनावर्णकं नेच्छति । न गोष्ठ्या । इदमत्र दारुणं मनोहरं च । नलिनिके ! किमेतत्।

मागधिका–भट्टिदारिए ! माअधिआ खु अहं । [ भर्त मागधिका खल्वहम् । ]

विलासिनी–भट्टिदारिए ! विलासिणी खु अहं । [ भर्तृ विलासिनी खल्वहम् । ]

नलिनिका–( उपगम्य ) भट्टिदारिए ! अहं णळिणिआ । सद्देण खु भट्टिदारिआए विञ्ञादं । भट्टिदारिए ! भट्टिणी [ भर्तृदारिके ! अहं नलिनिका। सोपानशब्देन खलु भर्तृ विज्ञातम् । भर्तृदारिके ! भट्टिनी भणति । ]

कुरङ्गी–किं त्ति । [ किमिति । ]

नलिनिका–( कर्णे ) एवं विअ । [ एवमिव । ]

कुरङ्गी–हं हीणं चारित्तं । [ हं हीनं चारित्रम् । ]

नलिनिका—णं सम्भावणीओ एसो । णं सो एव्व सो । [ ननु संभावनीय एषः । ननु स एव सः । ]

कुरङ्गी—णळिणिए ! संवाहेहि मं । [ नलिनिके ! संवाहय माम् । ]

नलिनिका—जं भट्टिदारिआ आणवेदि । [ यद् भर्तृदारिकाज्ञापयति । ]

विलासिनी—णळिणिए ! विवाहो कदा भविस्सिदि । [ नलिनिके ! विवाहः कदा भविष्यति । ]

( नेपथ्ये )

अद्य ।

नलिनिका—चिरं जीव ।

( नेपथ्ये )

राजपुरुषाः ! अमात्यः प्रस्थित इति कश्चिदमात्यभृत्यः कन्यापुररक्षणार्थं नाभ्यागतः । तद् यथेष्टं भवतु । तावदहं श्वो राज्ञो निवेदयिष्यामि ।

विलासिनी—हळा णळिणिए ! किं भणिदं । [ हला नलिनिके ! किं भणितम् । ]

नलिनिका—जदा सो भट्टिदारओ पविसदि, तदा होदि विवाहो । [ यदा स भर्तृदारकः प्रविशति, तदा भवति विवाहः । ]

विलासिनी—अविग्घेण पविसदु । [ अविघ्नेन प्रविशतु । ]

नलिनिका—एवं होदु । [ एवं भवतु ]

मागधिका—हळा ! एहि चउस्साळे उपविसामो । [ हला ! एहि चतुःशाले उपविशामः । ]

विलासिनी—एवं होदु । गदप्पाओ पओसो । आरूढा जोह्ना । [ एवं भवतु । गतप्रायः प्रदोषः । आरूढा ज्योत्स्ना । ]

नलिनिका—हळा ! मम वि अत्थरं अत्थरेहि । [ हला ! ममाप्यास्तरमास्तृणु । ]

मागधिका—अत्थि अवआसो । सेवेहि भट्टिदारिअं, ज लभदि । [ अस्त्यवकाशः । सेवस्व भर्तृदारिकां, यावन्निद्रां
नलिनिका—एवं होदु । [ एवं भवतु । ]

( उभे निष्क्रान्ते । )

( ततः प्रविशति खड्गहस्तश्चोरवेषेण रज्जुहस्तोऽविमारकः )

अविमारकः—( सविमर्शम् ) भोः ! कष्टं तारुण्यं नाम । कुत

रागं विजृम्भयति संश्रयते प्रमादं
दोषान् न चिन्तयति साहसमभ्युपैति ।
स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गं
बुद्धिं शुभां सुविदुषामवशीकरोति ॥ १ ॥

कथमात्माधीनेष्वर्थेषु मन्दीभवामि । इह हि,

नगरपरिचितोऽहं रक्षिणो ज्ञातसारा-
स्तिमिरगहनभीमं वर्तते चार्धरात्रम् ।
असिरपि सुसहायो निश्चितश्चान्तरात्मा
किमिह बहुविचारैः को मया दुष्करोऽर्थः ॥

अहो अर्धरात्रस्य प्रतिभयता । सम्प्रति हि,

गर्भस्था इव मोहमभ्युपगताः सर्वाः प्रजा निद्रया
प्रासादाः सुखसुप्तनीरवजना ध्यानं प्रविष्टा इ
प्रग्रस्ता इव सञ्चितेन तमसा स्पर्शानुमेया नगा
अन्तर्धानमिवोपयाति सकलं प्रच्छन्नरूपं जगत्

अद्यैव खलु वर्तते कालरात्रिः ।

तिमिरमिव वहन्ति मार्गनद्यः
पुलिननिभाः प्रतिभान्ति हर्म्यमालाः
तमसि दश दिशो निमग्नरूपाः
प्लवतरणीय इवायमन्धकारः ॥ ४ ॥

( परिक्रम्य कर्णं दत्त्वा ) अये गान्धर्वध्वनिरिव श्रूयते । कोनुखल्वयं सर्वकालसुखी पुरुषः कान्तया सह गान्धर्वमनुभवति । कथं
३ स्वयं वीणां वादयति । कुतः,

उच्चं हर्म्यं सन्निरुद्धाश्च जाला-
स्तन्त्रीनादः श्रूयते सानुनादम् ।
बाह्यस्थानं व्यक्तमेवं प्रयोक्तुं
किं सामर्थ्यं स्त्रीकराग्राङ्गुलीनाम् ॥ ५ ॥

गीतं तु पुनः स्त्रियाः । इह हि,

तानस्तु मन्दो विशदप्रवृत्तो
जातश्च नादो मुखनासिकेन ।
स्थूलोऽपि हेतुः करतालनादः
सञ्जायते सद्वलयस्वनेन ॥ ६ ॥

( परिक्रम्यावलोक्य ) हहह अयमपरः कः क्रुद्धां कान्तां प्रसादयति । महान् खल्वस्यापराधः, येनेयमस्यां वेलायामपि न प्रसीदति ।
३ अथवा प्रसन्ना खल्वियं व्यपदेशमिच्छति । कुतः,

वाष्पोपरुद्धजडगद्गदजिह्मकण्ठं
काहं तवेत्यसकलं प्रणयाद् वदन्ती ।
सद्भावतः प्रियवशं समुपागतापि
स्त्रीभावतः प्रवदति प्रतिकूलमेव ॥ ७ ॥

कोनुखल्वयं पक्षी भैरवस्वरः । आ उलूकः खल्वयम् । कथं हसितमनेन । उलूकस्वरश्रवणभीतया कान्तया परिष्वक्तः खल्वयं तपस्वी ।
३ सदृशं वयसः । किं परव्यापारवीक्षणम्[1] । साधयामस्तावत् । ( परिक्रम्य ) कोनुखल्वयमस्मिन् नगरापणालिन्दे सशङ्कितमतिस्निग्धं च सम्भाषते । अस्मत्सब्रह्मचारी खल्वयं तपस्वी ।

१ किमंपरव्यापारेण.

सम्पीड्यते परिजनेन शनैर्वदेति
संविग्नवद् भवति भूषणनिस्वनेन ।
सङ्गं वदत्यसुखदं मदनाभिभूतः
सङ्केतमिच्छति च नेच्छति चाभिगन्तुम् ॥ ८॥

( परिक्रम्य ) अये ज्योत्स्ना । नैषा ज्योत्स्ना, उभयपाङ्क्तिगतानां दानां गवाक्षान्तरगता दीपप्रभैषा । इह खलु प्रयत्नादात्मा तव्यः । अये अयं तु तस्करः । एष हि,

दृढपरिकरबन्धहृष्टचित्तः
परगृहवादनिविष्टदृष्टिचेष्टः ।
द्रुतगतिरपि दीपिकावलोकी
भवति च पादनिपातनादभीरुः ॥ ९ ॥

हन्त परिहरिष्याम्येनम् । ( एकान्ते स्थितः ) गतो नृशंसः मपि तावत् प्रतिष्ठामहे । (परिक्रम्य) अये रक्षिणः खल्वेते खलिवदानीं करिष्ये । भवतु दृष्टम् । इमां शृङ्गाटकस्थां वि प्रविशामि । ( विलङ्घ्य स्थित्वा )

आरक्षिणां तु विमुखं मितविक्रमाणां
मामभ्युपेत्य हसतीव ममैष खड्गः ।
नैते तु रक्षिपुरुषा मम भारभूता
मत्कार्यसाधनपरोऽहमिह प्रविष्टः ॥ १० ॥

गता रक्षिणः । के रक्षन्ति रक्षितात्मानम् ।

अबहुपुरुषपक्षमेत्य शौर्यं
निशि विचरन्ति सरागलोभमोहाः ।
इह तु पुरुषकारसारसाक्षी
बहुविषमश्च सुखश्च रात्रिचारः ॥ ११ ॥

एतद् राजकुलम् । अहो स्थिरत्वमुच्छ्रितत्वं प्राकारस्य । इह खलु प्रयुज्यते पुरुषाणां कक्ष्याबन्धः । अथवा प्रविष्ट एवाहं चिन्तायितव्यः, यदि स्थिराः कपिशीर्षकाः । इह स्थित्वा रज्जुं प्रक्षिपामि । नमः प्रजापतये । नमः सर्वसिद्धेभ्यः । प्रसीदन्तु बलिशम्बरमहाकालाः । विजृम्भतां रात्रिः । वर्धतां निद्रा । अनुमन्यतां पद्मा । लयं गताः सर्वविघ्ना भवन्तु । हताः परिपन्थिका भवन्तु । जयतु भगवती कात्यायनी । (रज्जुं क्षिप्त्वा) हन्त बद्धः कर्कटकरज्ज्वा कपिशीर्षकः । अहो भवितव्यस्य प्रभावः । एकेनैव क्षेपेण सुसंसक्तां रज्जुं कार्यसिद्धिमिव पश्यामि । अहो बलवान् हि भगवान् प्रजापतिः । कुतः,

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
को वा न सिध्यति ममेति करोति कार्यम् ।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्यसिद्धिः ॥ १२ ॥

भवतु रज्जुमवलम्ब्यारोहामि । (आरुह्य दृष्ट्वा) अहो राजकुलस्य श्रीः ।

विपुलमपि मितोपमं विभागा–
त्रिविडमिवाभ्युदितं क्रमोच्छ्रयेण ।
नृपभवनमिदं सहर्म्यमालं
जिगमिषतीव नभो वसुन्धरायाः ॥ १३ ॥

इह तु न स्थातव्यम् । अट्टालप्रतोलीन्द्रपथेभ्यः सर्वविघ्ना भवन्ति । भवतु अनयैव रज्ज्वावतरिष्यामि । ( अवतीर्य ) क्वनुखल्विदानीं रज्जुं प्रच्छादयामि । ( विचिन्त्य ) भवतु दृष्टम् । अस्यां हस्तिशालायां पाशं छित्वा क्षिपामि । ( प्रक्षिपति । परिक्रम्य )

अये तन्त्रीनादो युवतिकलगीतध्वनियुतः
अन्यतो यास्यामि ।
अये गन्धामोदो गजवरमदोद्बोधितपटुः ।
मुहूर्तं स्थित्वा यास्यामि ।
प्रभैषा दीपानामिह तु वितता रक्षिपुरुषाः
का गतिः ।
चिराद् रात्रौ शान्तं सह कमलषण्डैर्नृपगृहम् ॥ १४

यास्यामि । एष तयोक्तो मार्गः । इयं मन्दाकिनी । दारुपर्वतकः । इयमुपस्थानसभा । अये अयं कन्यापुरप्रासा
२ तु काष्ठकर्मबहुलतया समासन्नजालत्वाच्च सुखमारोढुम् । दुरारोहश्चेत्,

कान्तासमीपमुपगम्य मनोभिलाषा-
द्धर्म्याधिरोहणमतेर्मम का विशङ्का ।
संसक्तनालगतकण्टकभीतचेता-
स्तृष्णार्दितः क इह पुष्करिणीं जहाति ॥ १५

भवत्वारोहामि । ( आरुह्य ) इदं तयोक्तं जालयन्त्रम् । ( प्रविश्यावलोक्य च ) साधु कुन्तिभोज ! साधु [१] उत्प्रहसि
३ भवनेनानेन स्वर्गः । तथाहि,

हंसाः स्वपन्ति मणिरत्नशिलातलेषु
वैदूर्यमौक्तिककृताः सिकताप्रतानाः ।
स्तम्भाः प्रवालविहिताः किमिह प्रलापै-
र्मन्दीभवन्ति मणिदीपहताः प्रदीपाः ॥ १६ ॥

अलं रौद्रवेषेण । ( चोरवेषमपनीय कक्ष्याबन्धं विमुञ्चति )

---

१ °प्रधानाः.

नलिनिका–कोणुखु वुत्तन्तो भट्टिदारअस्स । भट्टिदारिआ वि अवत्थादुक्कलहं णिद्दं ळभदि अज्ज उ मम पिओ आअच्छदि त्ति सुदमत्तेण एव । [ कोनुखलु वृत्तान्तो भर्तृदारकस्य । भर्तृदारिकाप्य-वस्थादुर्लभां निद्रां लभत अद्य तु मम प्रिय आगच्छतीति श्रुतमात्रेणैव ।]

अविमारकः–( श्रुत्वा सहसोपसृत्य ) भवति ! अयं मे वृत्तान्तः ।

नलिनिका–( विलोक्य सहर्षम् ) साअदं भट्टिदारअस्स । [ स्वागतं भर्तृदारकस्य । ]

अविमारकः–( दृष्ट्वा सानन्दम् ) इयमियं सा । यत्र मम,

दृष्टिर्न तृप्यति परिष्वजतीव साङ्गं
बुद्धिस्त्वरां व्रजति बोधयतीव सुप्ताम् ।
रागोऽभिचोदयति सादयतीव चाङ्गं
हर्षात् प्रसीदति विमुह्यति चान्तरात्मा ॥ १७ ॥

नलिनिका–( आत्मगतम् ) एसो खु भअवं कामदेवो ओघो विअ उभअपक्खं पीडेइ । (प्रकाशम्) भट्टिदारअ ! अळङ्करीअदु सअणअळं । [ एष खलु भगवान् कामदेव ओघ इवोभयपक्षं पीडयति । भर्तृदारक ! अलंक्रियतां शयनतलम् । ]

अविमारकः–बाढम् । ( उपविशति )

नलिनिका–भट्टिदारअ ! किं ओबोधेमि भट्टिदारिअं । [भर्तृदारक ! किमवबोधयामि भर्तृदारिकाम् ।]

अविमारकः–भद्रे ! अलमलं बालचापलेन । पश्य,

अहं द्विनेत्रो न सहस्रनेत्रो
मतिश्च मूढा सुचिराभिलाषात्[1] ।
कामार्णवस्याद्य तु दृष्टपारं
चेक्रिड्यतां मे सुखमक्षियुग्मम् ॥ १८ ॥

[1] °भिलाषा.

नलिनिका–जाणामि जाणामि भट्टिदारिअं अन्तरेण भट्टिदा परिस्समं। [ जानामि जानामि भर्तृदारिकामन्तरेण भर्तृ परिश्रमम्। ]

अविमारकः–अद्य सफलो मे परिश्रमः।

कुरङ्गी–( बुद्ध्वा ) हळा! किं णिरणुक्कोसेण भणिअं। [ किं निरनुक्रोशेन भणितम्। ]

नलिनिका–भट्टिदारिए! भणिदं खु मए पुढमं। [ भर्तृ भणितं खलु मया प्रथमम् ]

अविमारकः–प्राप्तं खलु मया जीवितस्य फलं, येनेयमीदृश गता।

कुरङ्गी–( आत्मगतम् ) हं परिब्भट्ठम्हि। ( प्रकाशम् ) ह किं मए भणिदं। [ हं परिभ्रष्टास्मि। हला! किं मया भणि

नलिनिका–भट्टिदारिए! किञ्चि ण मन्तिदं। [ भर्तृदा किञ्चिन्न मन्त्रितम्। ]

अविमारकः–अयमस्या मोहविस्तरेण द्वितीयो मे मोहः।

कुरङ्गी–णळिणिए! चिरं खु उवविट्ठा। का वेळा। [ नलि चिरं खलूपविष्टा। का वेला। ]

नलिनिका–संवुत्तं अद्धरत्तं। [ संवृत्तोऽर्धरात्रः ]

कुरङ्गी–तेण हि परिस्सन्तासि। एहि परिस्सजेहि मं। [ परिश्रान्तासि। एहि परिष्वजस्व माम्। ]

नलिनिका–(अपवार्य) अहं संवाहेमि। भट्टिदारअ! परि भट्टिदारिअं। [ अहं संवाहयामि। भर्तृदारक! परि भर्तृदारिकाम्। ]

अविमारकः–(सहर्षम्) बाढम्। एवमेव त्वमपि प्रियशतानि शृणु।

कुरङ्गी–अळं अदिसिणेहेण। एहि दाव। [ अलमतिस्नेहेन। एहि तावत्। ]

नलिनिका–भट्टिदारिए! इअम्हि। [ भर्तृदारिके! इयमस्मि। ]

कुरङ्गी–(बलादाकृष्याविमारकमालिङ्गति) हं को दाणिं मं संवाहेदि। [ हं क इदानीं मां संवाहयति। ]

नलिनिका–(कर्णे) एवं विअ। [ एवमिव। ]

कुरङ्गी–(ससम्भ्रमम्) हा हीणं चारित्तं। भीदम्हि। [ हा हीनं चारित्रम्। भीतास्मि। ]

अविमारकः–

न त्वं प्रिये! मम नवासि मनोभियोगात्
किं कम्पसे पवनवेगहता लतेव।
भद्रे! भयं त्यज कुरुष्व मयि प्रसादं
किं वा प्रलप्य बहुधा शरणागतोऽस्मि ॥ १९ ॥

(कुरङ्गी सलज्जं नलिनिकां विलोकयति)

नलिनिका–भट्टिदारअ! उट्ठेहि उट्ठेहि। भट्टिदारिआ भणादि। उट्ठेहि किल। [ भर्तृदारक! उत्तिष्ठोत्तिष्ठ। भर्तृदारिका भणति। उत्तिष्ठ किल। ]

अविमारकः–बाढम्। (उत्तिष्ठति)

(प्रविश्य)

धात्री–जेदु भट्टिदारओ। [ जयतु भर्तृदारकः। ]

अविमारकः–कथं भवती।

धात्री–णळिणिए! अब्भन्तरमण्डवे खु रइदं सअणं। भट्टिदारिअं भट्टिदारअं च तहिं एव पवेसेहि। [ नलिनिके! अभ्यन्तरमण्डपे खलु रचितं शयनम्। भर्तृदारिकां भर्तृदारकं च तत्रैव प्रवेशय। ]

नलिनिका–तह। [ तथा। ]

( निष्क्रान्ता धात्री )

नलिनिका–भट्टिदारअ! अब्भन्तरमण्डवे खु रइदं सअणं। पविसदु भट्टिदारिआए सह। [ भर्तृदारक! अभ्यन्तरम रचितं शयनम्। तत्रैव प्रविशतु भर्तृदारिकया सह। ]

अविमारकः–त्वमप्येवं प्रियशतानि शृणु। ( हस्तेन त गृहीत्वेत्तिष्ठति। )

नलिनिका–एदु एदु भट्टिदारओ। [ एत्वेतु भर्तृदारकः। ]

अविमारकः–अयमयमागच्छामि।

( उभौ परिक्रामतः )

अविमारकः–( सहर्षम् ) अनृणोऽस्मि यौवनस्य। कुतः,

नेत्रे बाष्पपरिप्लुते करधृतौ व्यावल्गमानौ स्तनौ
श्रोणी चाधिकभारिका न विशदौ पादौ ह्रिया स्यन्दितौ।
एतत् सप्तपदप्रमाणमिह भोः! सम्पाद्यते योजना
यद्येषा क्षणदा भवेद् युगशतं धन्यो मदन्य कुतः॥ २

( निष्क्रान्ताः सर्वे )

तृतीयोऽङ्कः।

---

## अथ चतुर्थोऽङ्कः।

( ततः प्रविशति चाङ्गेरिकाहस्ता मागधिका )

मागधिका–अहो परिजणस्स पमादो। आसुय्योदअं पि ण पासादरअणा। ण सुणीअदि गोट्ठीजणकोळाहळो। किंणु आ, रत्तिजागरदाए पभादप्पसुत्ता भवे। जाव भट्टिदारिअं धेमि। ( परिक्रामति ) [ अहो परिजनस्य प्रमादः। आसूर्यो न कृता प्रासादरचना। न श्रूयते गोष्ठीजनकोलाहलः।

भवेत्। आ, रात्रिजागरतया प्रभातप्रसुप्ता भवेत्। यावद् भर्तृदारिका-मवबोधयामि।]

(ततः प्रविशति विलासिनी वीजनेन)

विलासिनी—मागधिए! चिट्ठ चिट्ठ। [मागधिके! तिष्ठ तिष्ठ।]

मागधिका—हळा! मा वारेहि। भट्टिदारिआए सुमणावण्णअं मए आणीअदि। [हला! मा वारय। भर्तृदारिकायै सुमनावर्णकं मया नीयते।]

विलासिनी—किं भट्टिदारिआए सुमणावण्णएण वा अळङ्कारेण वा। [किं भर्तृदारिकायाः सुमनावर्णकेन वालङ्कारेण वा।]

मागधिका—अविणीदे! मा अमङ्गळं भणाहि। सददाळङ्किदा भट्टिदारिआ होदु। [अविनीते! मा अमङ्गलं भण। सततालङ्कृता भर्तृदारिका भवतु।]

विलासिनी—ण खु। आइदी एव भट्टिदारिआए अलङ्कारो त्ति भणामि। [न खलु। आकृतिरेव भर्तृदारिकाया अलङ्कार इति भणामि।]

मागधिका—उम्मात्तिए! णणु पुप्फं वि वासीअदि। [उन्मत्तिके! ननु पुष्पमपि वास्यते।]

विलासिनी—सादिसं एदं। सभावरमणीआणि मण्डिदाणि अदिरमणीआणि होन्ति। [सदृशमेतत्। स्वभावरमणीयानि मण्डितान्यतिरमणीयानि भवन्ति।]

मागधिका—हळा! सुजोजिदो खु भट्टिदारिआए रूवाणुरूवो भत्ता। [हला! सुयोजितः खलु भर्तृदारिकाया रूपानुरूपो भर्ता।]

विलासिनी—अळं पक्खवादेण। भट्टिदारिअस्स समीवे भट्टिदारिआ पदुमिणिआ विअ दिस्सदि। [अलं पक्षपातेन। भर्तृदारकस्य समीपे भर्तृदारिका पद्मिनीव दृश्यते।]

मागधिका—सुट्ठु भणादि। अहं वि चिन्तेमि—ससरीरो भअवं

कामदेवो ईदिसो भवेत्ति। [ सुष्ठु भणति। अहमपि चिन्त सशरीरो भगवान् कामदेव ईदृशो भवेदिति। ]

विलासिनी—तह एव्व भट्टिदारिआ भट्टिदारअं विणा खणम रमदि। [ तथैव भर्तृदारिका भर्तृदारकं विना क्षणमात्रमपि न

( ततः प्रविशति सास्रा नालिनिका )

नलिनिका—( सशोकम् ) सच्चो खु लोअप्पवादो—बहुवि सुहाणि त्ति। एसो खु संवच्छरो अदिक्कन्दो भट्टिदारिआ च्छिण्णसुहसम्भोएण रदिं करिअ। अम्हाअं पुण गोट्ठी उत्तरकुरुवासो संवुत्तो। अज्ज उण महाराएण विदिदो वुत्तन्तो त्ति सुणिअ सीददि विअ सरीरं। भट्टिदारिआ च भअमअणेहिं अभिताळिअमाणा सन्दावेण मुद्धा अवअ विअ संवुत्ता। एसो खु पासादो णिव्वाविददीवो विअ भादि। तेण भट्टिदारएण विरहिदाए मम एक्कं पि हिअअ ण जादं। भट्टिदारओ अविग्घेण णिग्गदो त्ति सुणिअ अज्ज विअ मे हिअअं। सम्पदि सुरुद्धं कण्णाउरं। ( परिक्रम्य ) सहीओ। हळा माअधिए! किं एदं। [ सत्यः खलु लोक बहुविघ्नानि सुखानीति। एष खलु संवत्सरोऽतिक्रान्तो भर्तृदा अविच्छिन्नसुखसम्भोगेन रतिं कृत्वा। अस्माकं पुनर्गोष्ठीजनस्य वासः संवृत्तः। अद्य पुनर्महाराजेन विदित एष खलु वृत्ता श्रुत्वा सीदतीव शरीरम्। भर्तृदारिका च लज्जाभयमदनैरभिता सन्तापेन मुग्धापगतचेतनेव संवृत्ता। एष खलु प्रासादो निर्वा इव मे प्रतिभाति। तेन भर्तृदारकेण विरहिताया ममैकमपि तिकरं न जातम्। भर्तृदारकोऽविघ्नेन निर्गत इति श्रुत्वाद्य प्रल्हा मे हृदयम्। सम्प्रति सुरुद्धं कन्यापुरम्। अम्मो सख्यौ। ह धिके! किमेतत्। ]

मागधिका–हळा ! किं पुच्छसि । णं मण्डणवेळा भट्टिदारिआए । [ हला ! किं पृच्छसि । ननु मण्डनवेला भर्तृदारिकायाः । ]

नलिनिका–अदिक्कन्दो उच्छवो । ( रोदिति ) [अतिक्रान्त उत्सवः ।]

उभे–सिविणं विअ किं एदं । भणाहि समाणा भवामो । [ स्वप्न इव किमेतत् । भण समाना भवामः । ]

नलिनिका–सव्वहा गओ भट्टिदारओ । [सर्वथा गतो भर्तृदारकः ।]

उभे–हं ।

नलिनिका–अहं पि भट्टिदारिआए दुक्खं पेक्खिदुं असहन्ती इह आअदम्हि । [ अहमपि भर्तृदारिकाया दुःखं प्रेक्षितुमसहमानेहागतास्मि । ]

मागधिका–ण सक्कं खु भट्टिदारिआए अवत्थादंसणं । तह वि भट्टिदारिअं अस्सासइस्सामो । [ न शक्यं खलु भर्तृदारिकाया अवस्थादर्शनम् । तथापि भर्तृदारिकामाश्वासयिष्यामः । ]

उभे–एवं करेम्ह । [ एवं कुर्मः । ]

( सर्वा निष्क्रान्ताः )

प्रवेशकः ।

---

( ततः प्रविशत्यविमारकः )

अविमारकः–( सशोकम् )

कन्यापुरात् कथमपीह विनिर्गतं मे
भाग्यावशेषमवलम्ब्य शरीरमात्रम् ।
अद्यापि तन्मम मनो न तु मामुपैति
नावेक्षते मयि तया प्रिययावरुद्धम् ॥ १ ॥

कानुखलु भवेदवस्था कुरङ्गयाः ।

ह्रीता भवेत् प्रेष्यजनप्रवादैर्भीता च राज्ञा दृढसन्निरुद्धा ।
बाष्पाविला मामनवेक्षमाणा मोहं व्रजेद् रात्रिषु किं करिष्ये ॥२॥

हन्त दृष्टः प्रतीकारः । तथापि तावदस्मदपेक्षया नापेक्षित तस्मादहमपि तावत् तदर्थे प्राणान् परित्यजामि । ( कतिपयदिवसप्रोषितोऽहमास्मि । अद्य तु मानसं शारीरं मसह्यमिव मे प्रतिभाति । इह हि,

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम् ।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि जीवन्
कष्टोऽन्यः क इह भवेत् कृतघ्नभावः ॥ ३ ॥

सम्प्रति हि मदनेनान्तर्दह्यमानस्य क्षारीभवितुमारब्धो सूर्यः सहस्ररश्मिः । ( सर्वतो विलोक्य ) अहो प्रतिभयता घस्य । सम्प्रति हि,

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रय
विक्रोशन्त्यवशादिवोच्छ्रितगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्छामिव ॥

किमिदानीं करिष्ये । न चास्म्यहं गन्तुं समर्थः । कुतः,

लिम्पन्ति रूक्षपवनाः सिकताग्निचूर्णैः
संस्वेदयन्ति च नगाः परुषैः पलाशैः ।
दावैर्द्रवीकृततनुः स्रवतीव भास्वा-
नादित्यपाकचलितः फलतीव लोकः ॥ ५ ॥

हा प्रिये! हा सुन्दरि! देहि मे प्रतिवचनम् । ( मूर्छां पुनर्निःश्वस्य । ऊर्ध्वमवलोक्य ) रुद्धः खलु भगवान् सूर्यः रश्मिः । अथवा,

किमत्र चित्रं विततः पयोदा
रुन्धन्ति सूर्यं ननु वातनीताः ।
अन्तःस्थितं मे यदि वारयन्ति
कामं भवेद् विस्मयनीयमेतत् ॥ ६ ॥

किमनेन जीवन्मरणेन । विसर्जयिष्याम्यात्मानम् । ( उत्थाय परिक्रामति ) किन्नुखलु करिष्ये । भवतु दृष्टम् । अस्मिन्नारण्यतटाके विसर्जयिष्याम्यात्मानम् । धिगधर्मः खलु मे मरणमार्गः । अभिमानमोहान्महापथो विस्मृतः । अन्यथा प्रयतिष्ये । ( विलोक्य ) भवतु दृष्टम् । अये अदूरे दृश्यते दवाग्निः । तस्मिन् प्राणानाहुतिं करिष्यामि । ( उपगम्य प्रणम्य च ) भगवन् ! अग्ने !

इष्टं चेदेकचित्तानां यद्यग्निः साधयिष्यति ।
परत्रापि च मे कान्ता सा भवेदेककीर्तनी ॥ ७ ॥

( अग्निं प्रविश्य सकुतूहलम् ) किमिदं वर्तते ।

दग्धाः स्फुलिङ्गनिकरैर्निपतन्ति वृक्षा
ज्वालाश्च मे मलयचन्दनपङ्कशीताः ।
अग्निर्दयां हि कुरुते मदनातुरेऽति
पुत्रं पितेव च परिष्वजति प्रहृष्टः ॥ ८ ॥

भोः ! किमतः परं विस्मयनीयम् । अग्निः खलु मां न दहति । अथवा एतदप्यस्तिकारणम् । अन्यथा प्रयतिष्ये ( परिक्रम्य ) एष खलु महान् पर्वतः,

असितजलदवृन्दैर्मिश्रसन्दिग्धश‍ृङ्गो
गगनचरकुलानां विश्रमस्थानभूतः ।
सुकविमतिविचित्रो मित्रसंयोगहृद्यो
नरपतिरिव नीचो दृश्यते निष्फलाढ्यः ॥ ९ ॥

भवतु तावदस्मिञ्छैले प्राणान् परित्यजामि । मरुत्प्रपातो हि र्थसाधकः । यावदारोहामि । ( आरुह्यावलोक्य ) एतत् गोत्रस्थं स्नात्वोपस्पृश्य मन्त्रं जपामि । ( तथा कृत्वा जपति

( ततः प्रविशति विद्याधरः सह प्रियया )

विद्याधरः–

प्राक्सन्ध्या कुरुषूत्तरेषु गमिता स्नातः पुनर्मानसे
भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम् ।
क्रीडार्थं हिमवद्गुहासु चरिता दृष्टिश्च संलोभिता
यास्यावो मलयस्य चन्दननगान्मध्याह्ननिद्रासुखान् ॥ १

(आकाशयानं निरूप्य) सौदामनि ! पश्य पश्य भगवत्या वसु दूरस्थां दर्शनीयामाकृतिम् । इह हि,

शैलेन्द्राः कलभोपमा जलधयः क्रीडातटाकोपमा
वृक्षाः शैवलसन्निभाः क्षितितलं प्रच्छन्ननिम्नस्थलम् ।
सीमन्ता इव निम्नगाः सुविपुलाः सौधाश्च बिन्दूपमा
दृष्टं वक्त्रमिवाभिभाति सकलं संक्षिप्तरूपं जगत् ॥ १

भद्रे ! अवहिता भव । शीतचन्दननिलयं मलयं प्रयास्यावः
सौदामनी–अय्य ! तह । [ आर्य ! तथा । ]

( उभावाकाशयानं निरूपयतः )

सौदामनी–अय्य ! ण पारेमि अविस्सन्ता गन्तुं । [ आ पारयाम्यविश्रान्ता गन्तुम् । ]

विद्याधरः–तेन हि कस्मिंश्चित् पर्वते मुहूर्तं विश्रम्य गमिष्या
सौदामनी–अय्य ! पिअं मे । [ आर्य ! प्रियं मे । ]

( उभाववतरतः )

विद्याधरः–सौदामनि ! पश्य पश्य ।

जलदगहनमुज्झतीव वेगा-
दभिपततीव मही समुद्रमुद्रा ।
जलदसमयतोयदा इवामी
भृशमभिभान्ति नगा विजृम्भमाणाः ॥ १२ ॥

भवति ! अयं पर्वतः समर्थ इवास्माकं मुहूर्तमातिथ्यं कर्तुम् । तस्माद् विश्रान्तौ गमिष्यावः ।

सौदामनी–अय्य ! एवं करेम्ह । [ आर्य ! एवं कुर्वः । ]

विद्याधरः–सौदामनि ! पुष्पितानां नगानां षड्भागग्रहणमस्माकं धर्मः । तस्मादनृणान् वृक्षान् करिष्यावः ।

सौदामनी–अय्य ! तह । [ आर्य ! तथा । ]

( पुष्पापचयं नाटयतः )

विद्याधरः–( अविमारकं विलोक्य ) अये कोनुखल्वयम् । आ ज्ञातम् । विद्याधरः खलु मन्त्रभ्रष्टः । कुतः, रूपमीदृशं हि नान्येषाम् । दिष्ट्या यदयं दृष्टः । भवत्वहमपि विस्मृतं पृच्छामि ।

अविमारकः–भवतु कृतं देवकार्यम् । प्रपतामि । ( पार्श्वतो विलोक्य, विद्याधरं दृष्ट्वा ) भोः ! कोनुखल्वयम् । अथवा, स्वप्नोऽयं भवेत् । न ह्यहं सुप्तः । आ अन्तकाले मनुष्याः किमपि पश्यन्ति । तदेतत् स्यात् । तदपि संमूढानां खलु । अहं तु सर्वं जानामि । भवतु पृच्छाम्येनम् । भोः ! कतरकुलान्वयो भवतालङ्क्रियते ।

विद्याधरः–श्रूयताम्– 'अहं मेघनादो नाम विद्याधरः । इयं तावदस्मत्कुटुम्बिनी सौदामनी नाम । अद्य भगवन्तमगस्त्यमाराधयितुं मलयपर्वते विद्याधरैरुत्सवः प्रारब्धः । तत्र वयमपि सङ्केतिताः । इह मुहूर्तं विश्रम्य गमिष्याव इत्यवतीर्णाः । एषोऽस्माकं वृत्तान्तः । अथ किमर्थमिदानीं भवान् क्षितितलं देवलोकीकरोति ।

अविमारकः–(आत्मगतम्) किन्नुखलु वक्तव्यम्। वर्तमाने: कालेऽनृतं न वक्तव्यम्। (प्रकाशम्) भोः! सौवीरराः विमारको नाम्नास्मि।

विद्याधरः–(आत्मगतम्) एतदनृतम्। नेयमाकृतिर्मानुषी। शम्) अथ किमर्थमेकाकी भवानिहागतः।

अविमारकः–(आत्मगतम्) किन्नु खलु वक्ष्यामि।(अधोमुख

विद्याधरः–(आत्मगतम्) भवत्वहमेव ज्ञास्यामि। (विद्याम भोः! कष्टम्। अयं खलु भगवतोऽग्नेः पुत्र आत्मानं न कुन्तिभोजदुहितरं कुरङ्गीमभिलषमाणो रममाणश्च तत्र सति निर्गतः, पुनः प्रवेशोपायमलभमानः प्राणपरित्यागा मरुत्प्रपातं कर्तुमिहारूढः। सापि च तत्र जीवन्मरणमनु अहमस्यास्मिन् कार्ये सहायो भविष्यामि। (प्रकाशम् अविमारक! अच्छलं मित्रत्वं नाम। न शक्नोषि मया वि प्रच्छादयितुम्।

अविमारकः–उच्यताम्।

विद्याधरः–अद्यप्रभृत्यावयोः सख्यमस्तु। सकला च भव भिरवस्था विदिता। प्राणपरित्यागार्थमिहारूढो भवान् न

अविमारकः–वयस्य! एवमेतत्।

विद्याधरः–भोः! प्रीतोऽस्म्यनेन विस्रम्भेण। यदि तत्र प्रवेष्टुं स्यादुपायः, किं करिष्यति भवान्।

अविमारकः–(सहर्षम्) किमन्यत्। अनुप्रवेक्ष्यामि। त व्याक्षेपः।

विद्याधरः–तेन हि सखे! दृश्यतामङ्गुलीयम्। (इत्य दर्शयति)

अविमारकः–वयस्य! किमनेन प्रयोजनम्।

विद्याधरः–एतदङ्गुलीयकं दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति, वामेन प्रकृतिस्थः ।

अविमारकः–वयस्य ! एतदप्यस्ति ।

विद्याधरः–अयं ते प्रत्ययं करिष्यामि । वयस्य ! किं मां पश्यसि ।

अविमारकः–एवम् ।

विद्याधरः–अवहितो भव ।

अविमारकः–अवहितोऽस्मि ।

विद्याधरः–( दक्षिणाङ्गुल्यां प्रक्षिप्य ) वयस्य ! किं मां पश्यसि ।

अविमारकः–वयस्य ! छायापि न दृश्यते, किं पुनः शरीरम् । एते खलु लोके सुखिनो नाम ।

ये सञ्चरन्ति गगने वनितासहायाः
क्रीडन्ति पर्वततटेषु कृतोपदेशाः ।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्च विवृताश्च सुखं भ्रमन्ति ॥ १३ ॥

भवतु, प्रविष्ट एवास्म्यनेन ।

विद्याधरः–( वामाङ्गुल्यां प्रक्षिप्य ) तेन हि गृह्यतामङ्गुलीयकम् ।

अविमारकः–(प्रतिगृह्य) अनुगृहीतोऽस्मि ।

विद्याधरः–न न, अहमेवानुगृहीतः । कुतः,

न तथा रत्नमासाद्य सुजनः परितुष्यति ।
यथा तत् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति ॥ १४ ॥

अविमारकः–एकस्तु मे संशयः । मम शरीरे परीक्षितुमिति वक्तुमसदृशमिव ।

विद्याधरः–तेन हि प्रक्षिप दक्षिणाङ्गुल्याम् ।

अविमारकः–बाढम् । ( तथा करोति )

विद्याधरः–वयस्य ! गृह्यतामसिः ।

अविमारकः–बाढम् । ( खड्गं गृहीत्वा सविस्मयम् ) अहो प्रभावः ।

प्रच्छन्नरूपस्त्वशनिः कथञ्चित्
खड्गीकृतः स्यात्तु तडित्कलापः ।
निर्भर्त्सयन् सूर्यकृतां प्रदीप्तिं
वनं दवाग्निः सहसाभ्युपैति ॥ १५ ॥

विद्याधरः–अहो वीर्यमग्निपुत्रस्य । अस्य खड्गस्य प्रभावं धरेष्वपि कतिचित् सहन्ते । अग्निः खलु भगवानिमं

अविमारकः–( खड्गे दृष्ट्वा ) अहो भगवतीनां विद्यानां प्रभा

दिव्यं स्वभावं समुपागतोऽस्मि
स एव नामास्मि गुणैर्विशिष्टः ।
इदं यदा निर्गुणमर्त्यवृन्दै-
र्न ज्ञायते चास्ति च मे शरीरम् ॥ १६ ॥

वयस्य ! कृतमस्मत्कार्यम् । गृह्यतामसिः ।

विद्याधरः–यदिष्टं भवतः । वयस्य ! अन्तर्हितश्चान्तर्हि तत्स्पृष्टश्चान्तर्हिता भवन्तीति निश्चयः ।

अविमारकः–सखे ! प्रीतोऽस्मि । अयमभ्युदयादभ्युदयः अस्मदपेक्षया विलम्बितमिति तर्कयामि । मा वेलातिक्रमः ।

विद्याधरः–प्रविष्टोऽस्मि, यद्यापृष्टो भवान् ।

अविमारकः- किं बहुना भाषितेन ।

विद्यावशानां तु भवद्विधानां
कोऽस्माद्विधः स्यात् प्रतिकर्तुकामः ।

क्रीतोऽस्म्यहं जीवितसम्प्रदानात्
प्रशाधि मां किं करवाणि भृत्यः ॥ १७ ॥

विद्याधरः—जानाम्यहं भवतोऽच्छलां बुद्धिम् । यदि च भवानस्मद्वचनमनुवर्तते,

सख्यै मम प्रतिनिवेदय मामिमां च
त्वं मामनुस्मर सखे ! गतिरीक्ष्यतां मे ।
क्रीडारसैः प्रतिविलोभय राजपुत्रीं
कार्यान्तरेषु पुनरप्यहमस्मि पार्श्वे ॥ १८ ॥

अहो पुरुषसारो हि नाम नेच्छति विसर्जयितुं मे मनः । वयस्य ! गच्छामस्तावत् ।

अविमारकः—गच्छतु भवान् पुनर्दर्शनाय ।

विद्याधरः—बाढम् ।

( उत्थितो विद्याधरः सह प्रियया )

अविमारकः—( ऊर्ध्वमवलोक्य ) एष हि तत्रभवान् मेघनादो गगनार्णवमवगाढः । य एषः,

वातोद्धूताग्रकेशः सलिलधरदरीमृष्टदष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टसङ्गूढमध्यः ।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाणः प्रयाति ॥ १९ ॥

इयमपि विद्याबलेन प्रियमनुवर्तते । यैषा,

जवशिथिलविमुक्तपार्श्वकेशी
स्तनतटवल्गनाखिन्नसन्नमध्या ।
वियति दयितदत्तपूर्वकाया
तडिदिव तोयधरेषु दृष्टनष्टा ॥ २० ॥

गतस्तत्रभवान् मेघनादः। अहमप्यद्यैव नगराभिमुखो भवि यावदवतरामि। (अवतीर्य) परिश्रान्त इवास्मि। भव स्मिन् शिलातले मुहूर्तं विश्रम्य गमिष्यामि। (उपविशति)

(ततः प्रविशति विदूषकः।)

विदूषकः–अहो तत्तहोदो सुगहीदणामहेअस्स सोवीर अधण्णदा, जाए चिरं अपुत्तो भविअ अत्तणो णिअ सेण देव्वप्पसादेण अ माणुसलोअदुल्लभं सुपुत्तं लभि वि तादिसो एव संवुत्तो। सव्वहा मम अ समत्तजी बन्धुजणस्स अधण्णदाए परिब्भट्ठो कुमारो। (परिक्रम्य) खु तत्तहोदीए भणिदं—खेमेण गदो कुमारो त्ति। अहव जाणादि अदिसुउमारो राअउमारो एआई वम्महेण अ अमाणो परिब्भट्ठो कुसलो होदि त्ति। अहं वि कुमारं व रस्स सरीरं वा पेक्खिस्सामि दाव सव्वलोअं परि जदि ण पेक्खामि, तत्तहोदो परत्त सहाओ होमि। प खु अहं। भोदु, एदस्सिं पादपच्छाआअं मुहुत्तअं वि गमिस्सं। (स्वपिति) [अहो तत्रभवतः सुगृहीतना सौवीरराजस्याधन्यता, यया चिरमपुत्रो भूत्वात्मनो नियम दैवप्रसादेन च मानुषलोकदुर्लभं सुपुत्रं लब्ध्वा पुनरपि त संवृत्तः। सर्वथा मम च समाप्तजीविततया बन्धुजनस्या परिभ्रष्टः कुमारः। अद्य खलु तत्रभवत्या भणितं—क्षेमेण ग इति। अथवा कोऽत्र जानाति अतिसुकुमारो राजकुमार एका थेनाभिताड्यमानः परिभ्रष्टः कुशलो भवतीति। अहमपि कुमारस्य शरीरं वा प्रेक्षिष्ये तावत् सर्वलोकं परिभ्रम्य। यदि तत्रभवतः परत्र सहायो भवामि। परिश्रान्तः खल्वहम्। एतस्यां पादपच्छायायां मुहूर्तकं विश्रम्य गमिष्यामि।]

अविमारकः—कानुखलु सन्तुष्टस्यावस्था । सुष्ठु भवेद् यदि मे निर्गमनं तेन श्रुतं, न श्रुतं चेद् विपत्स्यते स ब्राह्मणः । अथवा किं मम सर्वारम्भैस्तेन विना । स हि,

गोष्ठीषु हास्यः समरेषु यौधः
शोके गुरुः साहसिकः परेषु ।
महोत्सवो मे हृदि किं प्रलापै-
र्द्विधा विभक्तं खलु मे शरीरम् ॥ २१ ॥

( सर्वतो विलोक्य ) अये कोनुखलु च्छायायामध्वगः प्रसुप्तः । ( उपेत्य ) अभ्युदयो मे हृदयस्य यदृच्छयागतः । त्वरते मे मनः परिष्वक्तुमेनम् ।

विदूषकः—( बुद्ध्वा ) चिरं खु सुत्तम्हि । जाव गच्छामि । को विस्समो णाम विब्भट्ठमणोरहाणं । ( परिक्रम्याविमारकं विलोक्य ) कहं तत्तभवं अविमारओ । [ चिरं खलु सुप्तोऽस्मि । यावद् गच्छामि । को विश्रमो नाम विभ्रष्टमनोरथानाम् । कथं तत्रभवान् अविमारकः । ]

अविमारकः—अये वयस्यः सन्तुष्टः ।

( उभौ परिष्वजेते )

विदूषकः—( उच्चैर्विहस्य ) भो वअस्स ! कहेहि कहेहि एत्तिअं काळं किं तुए किदं । [ भो वयस्य ! कथय कथयैतावन्तं कालं किं त्वया कृतम् । ]

अविमारकः—वयस्य ! एतत् कृतम् । ( अङ्गुलीयकं दक्षिणाङ्गुल्यां प्राक्षिप्य तिरस्कृतः । )

विदूषकः—हा हा कहिं कहिं तत्तभवं । कहं ण दिस्सदि । आ तास्सिं गदाए चिन्ताए तं विअ पेक्खामि । अहव फुडीकरिस्सं ।

भो वअस्स ! सावेण साविदो सि, जदि अत्ताणं छादेसि हा क्व क्व तत्रभवान् । कथं न दृश्यते । आ तस्मिन् गतया ि तमिव पश्यामि । अथवा स्फुटीकरिष्यामि । भो वयस्य ! शापितोऽसि, यद्यात्मानं छादयसि । ]

अविमारकः–वयस्य ! अयमस्मि ।

विदूषकः–कहिं कहिं सि । [ क्व क्वासि । ]

अविमारकः–(वामाङ्गुल्यामङ्गुलीयकं प्रक्षिप्य) वयस्य ! अयम

विदूषकः–पुढमं सुद्धो अविमारओ, इदाणिं माआवि संवुत्तो । एवं माआवित्तअ ! किस्स तुवं कण्णाउरे पच्छ ण चरसि । [ प्रथमं शुद्धोऽविमारकः, इदानीं मायावि संवृत्तः । एवं मायावित्तक ! कस्मात् त्वं कन्यापुरे प्रच्छन्नरूपो न च

अविमारकः–वयस्य ! इदानीं खल्वेतदुपलब्धम् ।

विदूषकः–अच्छरीअं अच्छरीअं । कुदो दाणि एदस्स आ [ आश्चर्यमाश्चर्यम् । कुत इदानीमेतस्यागमः । ]

अविमारकः–सर्वमन्तःपुरे कथयिष्यामि ।

विदूषकः–सम्पदि बुभुक्खिदो सि । [ संप्रति बुभुक्षितोऽसि ।

अविमारकः–वैधेय ! शीघ्रमागच्छ प्रक्षेपभूमिप्रवेशाय । हस्तो मोचयितव्यः ।

विदूषकः–अच्छरीअं अच्छरीअं । अहं पि दाव अदिस्सो सरीरं अत्थि वा णत्थि वा । उच्छिट्ठं करिस्सं । थु थु । [ माश्चर्यम् । अहमपि तावददृश्यः । मम शरीरमस्ति वा नास्ति उच्छिष्टं करिष्यामि । थु थु । ]

अविमारकः–मूर्ख ! अलमलं विलंबितेन । त्वरते मे मनः दर्शनाय । ( आकर्षति )

विदूषकः–ण मे सद्धा । [ न मे श्रद्धा । ]

अविमारकः—हन्त भोजनवेलां प्रतिपालयामि ।

विदूपकः—कञ्चि काळं विस्समिअ गमिस्सामो । [ कंचित् कालं विश्रम्य गमिष्यावः । ]

अविमारकः—किं न स्मरति मां कुरङ्गी ।

विदूपकः—किण्णुखु जीवदि णग्गन्धस्समणिआ । [ किंनुखलु जीवति नग्नान्धश्रमणिका । ]

अविमारकः—वयस्य ! याचे भवन्तं, शीघ्रमागम्यताम् ।

विदूपकः—किस्स तुवं किदसमावुत्तो वडुओ विअ तुवरसि । [ कस्मात् त्वं कृतसमावर्तो वटुक इव त्वरसे । ]

अविमारकः—मूर्ख ! इतस्तावत् ।

विदूपकः—मा कड्ढेहि, अअं अणुधावामि । [ मा कर्ष, अयमनुधावामि । ]

अविमारकः—( परिक्रम्य ) एतन्नगरम् ।

विदूपकः—पेक्खामि दाव णअरस्स सोहं । [ पश्यामि तावन्नगरस्य शोभाम् । ]

अविमारकः—इदं राजकुलम् ।

एतन्नरेन्द्रभवनं निशि जातशङ्को
　　यत् साहसं समुपलभ्य तथा प्रविष्टः ।
भूयस्तदेव दिवसे सुसहायमायो
　　वृन्दं सतामिव पटुः प्रविशाम्यशङ्कः ॥ २२ ॥

(परिक्रम्य) इदानीं प्रासादे स्नातयाभ्यन्तरस्थया कुरङ्गया भवितव्यम् ।

विदूपकः—जहिं वा तहिं वा पविसामो । अदिक्कमदि भिक्खवेळा । [ यत्र वा तत्र वा प्रविशावः । अतिक्रामति भिक्षावेला । ]

अविमारकः–एहि तावदभ्यन्तरमेव प्रविशावः। (प्रविश्य) इ

पुरे गृहे वापि पुरा सुखोषितै-
र्मनस्विभिर्दुर्लभाचिन्तयागतैः।
पुनः कृतार्थैर्मुदितान्तरात्मभिः
सुखं प्रवेष्टुं सविशेषकर्मभिः॥ २३॥

( निष्क्रान्तौ )

## चतुर्थोऽङ्कः।

---

## अथ पञ्चमोऽङ्कः।

( ततः प्रविशति कुरङ्गी नलिनिका च )

नलिनिका–भट्टिदारिए! अळं सन्दावेण। कण्णाउरप आलुहिअ दिट्ठिविळोभणं करिस्सामो। [भर्तृदारिके! सन्तापेन। कन्यापुरप्रासादमारुह्य दृष्टिविलोभनं करिष्यावः।]

कुरङ्गी–हळा! किं तुए मम हिअअं परिण्णादं। ए अजाणन्तेण परिजणेण मम परितोसाणिमित्तं बउळ सज्जज्जुणकदम्बणीवणिउळप्पहुदीणि मेहकाळवळ्ळहाणि सुरहीणि आणीअमाणाणि मं उम्मादअन्ति। अह अ इमे अम्हाअं राअउळमाणसे अदिपीठमद्दभावं करन्ति। सददळाळिदा वि अदेसकाळज्जदाए अत्तणो कज्जभावं दंसेदि। सुअसारिआ वि वक्खाणं एव कहेदुं अ मम णिव्वेदभावं अजाणन्ती भूदिअसारिआ वि सव्वळो कहइस्सामि त्ति आअदा। मम रोआवत्थं पुच्छिदुं परिजणो मं णिब्बन्धिअ णिवेदेदि। ता इच्छामि मुहुत्तअं अच्छिदुं। [हला! किं त्वया मम हृदयं परिज्ञातम्

ह्यजानता परिजनेन मम परितोषनिमित्तं बकुलसरलसर्जार्जुनकदम्बनीपनिचुलप्रभृतीनि मेघकालवल्लभानि परमसुरभीण्यानीयमानानि मामुन्मादयन्ति । अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिपीठमर्दभावं कुर्वन्ति । अस्माभिः सततलालिता अप्यदेशकालज्ञतयात्मनोऽधिकज्ञभावं दर्शयन्ति । शुकसारिकापि व्याख्यानमेव कथयितुमारब्धा । मम निर्वेदभावमजानन्ती भूतिकसारिकापि सर्वलोकवृत्तान्तं कथयिष्यामीत्यागता । मम रोगावस्थां प्रष्टुमागतः परिजनो मां निर्बध्य निवेदयति । तदिच्छामि मुहूर्तकं प्रासादे आसितुम् । ]

नलिनिका—जं भट्टिदारिआए रुइदं ! होदु । [ यद् भर्तृदारिकायै रुचितम् । भवतु । ]

( उभे आरोहतः । )

कुरङ्गी—हळा ! एत्थ वि महन्तो अणत्थो उट्ठिदो विज्जुप्पदीवं धारिअ काळमेहो । [ हला ! अत्रापि महाननर्थ उत्थितः विद्युत्प्रदीपं धृत्वा कालमेघः । ]

नलिनिका—भट्टिदारिए ! अळं उक्कण्ठिदेण । पेक्ख पेक्ख णवसळिळधररुद्धसुय्यं पविरळजळणिवाददस्सणीअं गअणअळं । [ भर्तृदारिके ! अलमुत्कण्ठितेन । पश्य पश्य नवसलिलधररुद्धसूर्यं प्रविरलजलनिपातदर्शनीयं गगनतलम् । ]

कुरङ्गी—पेक्खामि अ रमणीअं आआसं । [ पश्यामि च रमणीयमाकाशम् । ]

( ततः प्रविशत्यविमारको विदूषकश्च )

अविमारकः—वयस्य ! दृष्टा सा कुरङ्गी । यैषा,

रोगादकालागुरुचन्दनार्द्रा
विमुक्तभूषा गतहावभावा ।

विभाति निर्व्याजमनोहराङ्गी
वेदश्रुतिर्हेतुविवर्जितेव ॥ १ ॥

विदूषकः–भो ! तुट्ठो म्हि । तुवं खु सव्वळोए अहं सुरूवो अत्ताणं आअरसि । जिदो दाणि तत्तहोदीए सहावरम रूवेण । चिन्तेमि भवदो विओएण इअं तणुआ जादा । एवं एसा बाळचन्दळेहा विअ दिट्ठिं तोसेदि । [ भोः ! तुष्टोऽस्मि खलु सर्वलोकेऽहं सुरूप इत्यात्मानमाचरसि । जित इदानीं तत्रभ स्वभावरमणीयेन रूपेण । चिन्तयामि भवतो वियोगेनेयं तनुका ज एवमप्येषा बालचन्द्रलेखेव दृष्टिं तोषयति ।]

अविमारकः–सखे ! अतिपण्डित इव, किमेतत् ।

विदूषकः--भो ! णिच्चपरिचएण मं परिहससि । अपुव्वो जणो बुद्धिं अजाणन्तो अहिअदरं पसंसेदि । अहं पि तं जाणिअ ए णअरे केण वि विस्सम्भं ण करेमि । [ भोः ! नित्यपरिचये परिहससि । अपूर्वो जनो मम बुद्धिमजानन्नधिकतरं प्रशंसति । अ तद् ज्ञात्वैतस्मिन्नगरे केनापि विस्रम्भं न करोमि । ]

अविमारकः–अलमौदासीन्येन । बहुजनपरिवारतया न लब्ध कान्तां प्रबोधयितुम् । तदिदानीं प्रासादगतामपि तत्रैव तां यिष्यावः ।

विदूषकः–सुट्ठु भवं भणादि । पासादं आलुहामो । [ सुष्ठु भणति । प्रासादमारोहावः । ]

अविमारकः–सखे ! प्रयत्नादारोढव्यं यथा तथा न प्रवर्तते प्र शब्दः ।

विदूषकः–भो ! ण सक्कं एदं । को सकदि उच्छिट्ठं ण भुञ्जिदुं । अहं एत्थ चिट्ठामि । तुवं एव आलुह । [ भो

शक्यमेतत् । कः शक्नोत्युच्छिष्टमकुर्वन् भोक्तुम् । अहमत्र तिष्ठामि । त्वमेवारोह । ]

अविमारकः—यदि विमुञ्चे, दृश्यते भवान् ।

विदूषकः—भो ! विस्सरिदं खु मए एदं । पुणो पुणो कहेहि । [भोः ! विस्मृतं खलु मयैतत् । पुनः पुनः कथय । ]

अविमारकः—इतस्तावत् । ( आरुह्यावलोक्य ) सखे ! इयमस्मत्कान्ता शिलातले नलिनिकया सहास्ते । यैषा,

सव्ये करे समुपवेश्य मुखं सुदीनं
कालं मनोभवसहायममृष्यमाणा ।
व्यग्रा विचिन्तयति किञ्चिदलोलदृष्टि-
र्बाष्पं निवारयितुमूर्ध्वमवेक्षमाणा ॥ २ ॥

कुरङ्गी—( स्वगतम् ) किं एदेण जीवम्मरणेण । ( प्रकाशम् ) णळिणिए ! गच्छ, माअधिअं आणेहि उवण्हाणेण । [ किमेतेन जीवन्मरणेन । नलिनिके ! गच्छ मागधिकामानयोपस्नानेन । ]

नलिनिका—एआइणिं भट्टिदारिअं उज्झिअ कहं गमिस्सं । ण हु एत्थ को वि जणो । [ एकाकिनीं भर्तृदारिकामुज्झित्वा कथं गमिष्यामि । न खल्वत्र कोऽपि जनः । ]

( प्रविश्य )

हरिणिका—जेदु भट्टिदारिआ । भट्टिदारिए ! भट्टिणी भणादि—सम्पदि कीदिसी सीसवेदणत्ति । एदं वि ओसधं ळिम्पेहि किळ । [ जयतु भर्तृदारिका । भर्तृदारिके ! भट्टिनी भणति—सम्प्रति कीदृशी शीर्षवेदनेति । एतदप्यौषधं लिम्प किल । ]

कुरङ्गी—णळिणिए ! गच्छ दाणि तुवं । तक्केमि देवो वरिसिदुं आरद्धो । अहं इच्छामि अहिणवेण आआसतोएण ण्हादुं । ता तुवारेहि उवण्हाणं । [ नालिनिके ! गच्छेदानीं त्वम् । तर्कयामि देवो

वर्षितुमारब्धः। अहमिच्छाम्यभिनवेनाकाशतोयेन स्नातुम्। त योपस्नानम्।]

नलिनिका—जं भट्टिदारिआ आणवेदि। [यद् भर्तृदारिकाज्ञाप

अविमारकः--किन्नुखल्वनया व्यवसितम्।

कुरङ्गी—हळा! एहि दाव! [हला! एहि तावत्।]

नलिनिका--भट्टिदारिए! इअम्हि। [भर्तृदारिके! इयमस्मि।

कुरङ्गी—हळा णं! सीदळं दे सरीरं। [हला! ननु शी शरीरम्।]

नलिनिका—भट्टिदारिए! ण आणामि। [भर्तृदारिके! न जान

कुरङ्गी—हळा! एहि परिस्सजेहि मं। [हला! एहि परि माम्]

नलिनिका—भट्टिदारिए! तह। (परिष्वजते) [भर्तृदारिके! त

कुरङ्गी—हळा! अदिसीदळं मणोहरं च दे सरीरं। [हला! शीतलं मनोहरं च ते शरीरम्।]

नलिनिका—अणुग्गहीदम्हि। [अनुगृहीतास्मि।]

कुरङ्गी—हळा! सम्पदि णस्सदि विअ मे सरीरदाहो। (ह हन्त किदो सहिप्पणओ। समत्तो अ अज्ज एदाए सरीरसं (प्रकाशम्) गच्छ दाणि तुवं। [हला! सम्प्रति न शरीरदाहः। हन्त कृतः सखीप्रणयः। समाप्तश्चाद्यैतस्याः संसर्गः। गच्छेदानीं त्वम्।]

नलिनिका—जं भट्टिदारिआ आणवेदि। (निष्क्रान्ता) भर्तृदारिकाज्ञापयति।]

हरिणिका—भट्टिदारिए! भट्टिणीए किं णिवेदेमि। [भर्तृ भट्टिन्यै किं निवेदयामि।]

कुरङ्गी–अज्ज विअदरोआ सोत्था होदि त्ति। [अद्य विगतरोगा स्वस्था भवतीति।]

हरिणिका–कहं तुए विञ्ञादं त्ति पुच्छिदा किं विण्णवेमि। [कथं त्वया विज्ञातमिति पृष्टा किं विज्ञापयामि।]

कुरङ्गी--सुट्ठु तुए विञ्ञादं। एदेण ओसधाविसेसेण त्ति भणेहि। [सुष्ठु त्वया विज्ञातम्। एतेनौषधविशेषेणेति भण।]

हरिणिका–जं भट्टिदारिआ आणवेदि। (निष्क्रान्ता) [यद् भर्तृदारिकाज्ञापयति।]

अविमारकः–किन्नुखल्वनया व्यवसितम्।

> उष्णं श्वसिति तन्वङ्गी सर्वतः प्रेक्षते मुहुः।
> नेत्राभ्यां बाष्पपूर्णाभ्यां किन्नु कर्तुं व्यवस्थिता॥ ३॥

कुरङ्गी–होदु, उत्तरीअवासेण अत्ताणं उब्बन्धिअ वावादइस्सं। (उत्थाय तथा कुर्वती मेघस्तनितं श्रुत्वा) हं परित्ताआहि परित्ताआहि मं। [भवतु, उत्तरीयवाससात्मानमुद्बध्य व्यापादयिष्यामि। हं परित्रायस्व परित्रायस्व माम्।]

अविमारकः–सखे! न शक्यमतःपरमुपेक्षितुम्। (अङ्गुलीयकं वामाङ्गुल्यां प्रक्षिप्य) कान्ते! न भेतव्यं न भेतव्यम्। (इति कुरङ्गीमुत्थापयति)

कुरङ्गी–(सहर्षम्) किण्णुखु सच्चं एदं। मूढा विअ जादा। [किन्नुखलु सत्यमेतत्। मूढेव जाता।]

अविमारकः–कान्ते! व्यपनीयतां शङ्का। (परिष्वजते)

कुरङ्गी–अच्छरीअं। एकक्खणेण णस्सदि विअ मे सरीरदाहो। [आश्चर्यम्। एकक्षणेन नश्यतीव मे शरीरदाहः]

अविमारकः–अयं खल्वस्याः परिष्वङ्गः,

सततपरिचितो मनोभियोगा-
दधिकरसः प्रथमात् समागमात् ।
रणशिरसि नृपेण साहसाद्यो
विजय इवाद्य मयानुभूयते ॥ ४ ॥

विदूषकः—कहं रोदिदुं आरद्धा । अळं अदिमत्तं सन्‍ अहव अहं वि रोदामि । एक्कं पि ताहिं दुळ्ळहं मम ण बप्फं ण णिग्गच्छइ । जदा मे पिदा उवरदो, तदा वि आरम्भेण रोदिदुं आरद्धो । बप्फं ण णिग्गच्छइ । किं पुण सन्दावस्स । तह वि अणुस्सुओ रोदामि । [ कथं रोदितुं अलमतिमात्रं सन्तापेन । अथवा अहमपि रोदिमि । एकमपि त मम नयनाद् बाष्पं न निर्गच्छति । यदा मे पितोपरतस्तदा रम्भेण रोदितुमारब्धः । बाष्पं न निर्गच्छति । किं पुनरन्यसन्‍ तथाप्यनुत्सुको रोदिमि । ]

अविमारकः—अलमुत्प्रहसितेन । अच्छलो हि स्नेहो नाम ।

न ते न बुद्धिर्मम दूषणीया
येन प्रकामं भवतास्मि हास्यः ।
प्राज्ञस्य मूर्खस्य च कार्ययोगे
समत्वमभ्येति तनुर्न बुद्धिः ॥ ५ ॥

( प्रविश्य )

नलिनिका—हरिणिए ! हरिणिए ! । कहं दुवारं रुद्धं । ह रणिरोहेण अवअदसन्दावं अत्ताणं करिस्सदि त्ति तक्के णिए ! । हरिणिए ! । हद्धि तं एव संवुत्तं । [ हरिणिके ! कथं द्वारं रुद्धम् । हा धिग् द्वारनिरोधेनापगतसन्तापमात्मा तीति तर्कयामि । हरिणिके ! हरिणिके ! । हा धिग् तदेव

अविमारकः—नलिनिकाया इव स्वरः । वयस्य! विघाट्यतां द्वारम् ।

विदूषकः—जं भवं आणवेदि । ( विघाट्य ) एदु एदु भोदी । [ यद् भवानाज्ञापयति । एत्वेतु भवती । ]

नलिनिका—हं को दाणिं एसो पुरिसो । [ हं क इदानीमेष पुरुषः ।]

विदूषकः—सुट्ठ विण्णादं तुए । अहो राअउलस्स विसेसो । को अण्णो जणो मं पेक्खिअ पुरिसो त्ति भणादि । इत्थिआ खु अहं । [ सुष्ठु विज्ञातं त्वया । अहो राजकुलस्य विशेषः । कोऽन्यो जनो मां प्रेक्ष्य पुरुष इति भणति । स्त्री खल्वहम् । ]

अविमारकः—नलिनिके ! प्रविशेदानीम् ।

नलिनिका—कहं भट्टिदारओ । भट्टिदारअ ! वन्दामि । भट्टिदारअ ! को एसो पुरिसो । [ कथं भर्तृदारकः । भर्तृदारक ! वन्दे । भर्तृदारक ! क एष पुरुषः । ]

विदूषकः—अहं पुक्खरिणी णाम चेडी । [ अहं पुष्करीणी नाम चेटी । ]

अविमारकः—योऽस्माभिः सदा कथ्यते सन्तुष्ट इति, सोऽयं ब्राह्मणः ।

नलिनिका—आ दिट्ठपुरुवो णअरापणाळिन्दे अअं बम्हणो । [ आ दृष्टपूर्वो नगरापणालिन्देऽयं ब्राह्मणः । ]

विदूषकः—आम भोदि । जण्णोपवीदेण बम्हणो, चीवरेण रत्तपडो । जदि वत्थं अवणेमि, समणओ होमि । भोदि ! किं एदं । [ आम भवति ! यज्ञोपवीतेन ब्राह्मणः, चीवरेण रक्तपटः । यदि वस्त्रमपनयामि श्रमणको भवामि । भवति ! किमेतत् । ]

नलिनिका—भट्टिदारिआए उवण्हाणं। [भर्तृदारिकाया उपस्नानम् ।]

विदूषकः—किं एदिणा बुभुक्खिदाए रोदन्तीए अत्तहोदीए उवण्हाणेण कय्यं । गच्छ सिग्घं भोअणं आणेहि । अहं अग्गासणीओ

होमि । [ किमेतेन बुभुक्षिताया रुदन्त्या अत्रभवत्या उप- कार्यम् । गच्छ शीघ्रं भोजनमानय । अहमग्रासनीयो भवामि ।

नलिनिका–दुब्बम्हण ! एदं पि भोअणं चिन्तेसि । सव्वं चिट्ठदु । कहं दिअसे अणेअपुरुससम्पादे राअमग्गे भट्टि- पविट्ठो । [ दुर्ब्राह्मण ! एतदपि भोजनं चिन्तयसि । सर्वं तिष्ठतु । कथं दिवसेऽनेकपुरुषसम्पाते राजमार्गे भर्तृदारकः प्रवि-

अविमारकः–सर्वं भवत्यै सन्तुष्टः कथयिष्यति ।

नलिनिका–विसज्जिदम्हि इमिणा बहुमाणवअणेण । होदु, गह्णिअ चउस्साळं पविसिअ गोट्ठीजणेण सह वुत्तन्तं सुण- एहि ब्म्हण ! ( इत्याकर्षति । ) [ विसर्जितास्म्यनेन बहुमानव- भवतु, इमं गृहीत्वा चतुःशालं प्रविश्य गोष्ठीजनेन सह श्रृणोमि । एहि ब्राह्मण ! । ]

विदूषकः–अब्बम्हण्णं अब्बम्हण्णं । [ अब्रह्मण्यमब्रह्मण्यम् ।

कुरङ्गी–हस्सो खु अअं बम्हणो । [ हास्यः खल्वयं ब्राह्मणः ।

अविमारकः—वयस्य । हास्यः खलु भवान् ।

विदूषकः—को एत्थ मम अस्सद्धेअं भणादि । अहं ण ह- तत्तहोदी एव हस्सा । जा अत्तणो अवत्थं जाणिअ किं पि ववसिअ मेहसद्दं सुणिअ सव्वं विसुमरिअ पडिदा । [ ममाश्रद्धेयं भणति । अहं न हास्यः, तत्रभवत्येव हास्या । या- वस्थां ज्ञात्वा किमपि कर्तुं व्यवस्य मेघशब्दं श्रुत्वा सर्वं वि- पतिता । ]

कुरङ्गी–हं एदं पि इमेहि दिट्ठं । [ हम् एतदप्याभ्यां दृष्टम्

नलिनिका–याचेमि अहं । इदो एहि बम्हण ! । [ याचे- इत एहि ब्राह्मण ! । ]

विदूषकः–जइ भोअणं देसि, तदो गच्छामि अहं । इट्ठं आअन्तुअस्स भोअणदाणं । [ यदि भोजनं ददासि, ततो गच्छाम्यहम् । इष्टमागन्तुकस्य भोजनदानम् । ]

नलिनिका–एहि मे सव्वाभरणं देमि । [एहि मे सर्वाभरणं ददामि ।]

विदूषकः–णहि घिदवअणेण पित्तं णस्सदि । मम हत्थगदं करेहि । [ नहि घृतवचनेन पित्तं नश्यति । मम हस्तगतं कुरु । ]

नलिनिका–एवं होदु । ( आभरणान्यवमुच्य ददाति ) [एवं भवतु ।]

विदूषकः–सुणादु होदी । [ श्रृणोतु भवती । ]

नलिनिका–मूढ ! बम्हण ! चउस्साळे उवविसिअ गोट्ठीजणेण सह सुणामि । [ मूढ ! ब्राम्हण ! चतुःशाल उपविश्य गोष्ठीजनेन सह शृणोमि । ]

विदूषकः-तत्तहोदीं पुच्छिअ आअच्छामि।[तत्रभवतीं पृष्ट्वागच्छामि।]

नलिनिका–को तुवं, मम सव्वाभरणं गहिअ वल्लहो जादो । एहि दाव । ( विदूषकं हस्ते गृह्णाति । ) [कस्त्वं, मम सर्वाभरणं गृहीत्वा वल्लभो जातः । एहि तावत् । ]

विदूषकः–भोदि ! मा मा एवं । अदिसुउमारो खु अहं । [भवति! मा मैवम् । अतिसुकुमारः खल्वहम् । ]

नलिनिका–जाणामि जाणामि दे सुउमारत्तणं । जइ सुउमारो, सिग्घं एहि । [जानामि जानामि ते सुकुमारत्वम् । यदि सुकुमारः, शीघ्रमेहि ।]

विदूषकः–भोदि ! अअं आअच्छामि । [भवति! अयमागच्छामि ।]

( निष्क्रान्तौ । )

अविमारकः–प्रिये ! पश्य पश्य परमदर्शनीयान् प्रावृट्कालवल्लभान् कालमेघान् । इमे हि,

जलदसमयघोषणाडम्बरानेकरूपक्रियाजम्भका वज्रभृद्गृष्टयो
भगणयवनिकास्तटित्पन्नगीवासवल्मीकभूता नभोमार्गरूढक्षुपाः ।

मदनशरनिशानशैलाः प्ररुष्टाङ्गनासन्धिपाला गिरिस्नापनाम्भोघ
उदधिसलिलभैक्षहारा रवीन्द्वर्गला देवयन्त्रप्रपा भान्ति नीलाम्बुदाः

कुरङ्गी–अय्यउत्त ! दस्सणीआ दाणिं संवुत्ता । [ आर्यपुत्र ! द्र याः इदानीं संवृत्ताः । ]

अविमारकः–अहो विपुलता विरलता धाराणाम् । तथाहि,

ज्योमार्णवोर्मिसदृशा निनदन्ति मेघा
मेघप्ररोहसदृशाः प्रपतन्ति धाराः ।
रक्षोङ्गनाभ्रुकुटिवत् तडितः स्फुरन्ति
प्राप्तोऽग्र्यौवनघनस्तनमर्दकालः ॥ ७ ॥

कुरङ्गी–अय्यउत्त ! आरद्धो सम्पदि वरिसिदुं देवो । [ आर्य आरब्धः सम्प्रति वर्षितुं देवः । ]

अविमारकः–प्रिये ! एहि अभ्यन्तरमेव प्रविशावः ।

कुरङ्गी– ( सहर्षम् ) जं अय्यउत्तो आणवेदि । [ यद् आ आज्ञापयति । ]

( निष्क्रान्तौ । )

पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

( ततः प्रविशति धात्री । )

धात्री–अहो अणवत्था किदन्तस्स, जं राअदारिआ पढमं एण सोवीरराएण तं विह्नुसेणं उद्दिसिअ वरिदा । अज्ज दिअसम्भवेण माणुसलोअदुल्लभाकिदिगुणविसेसेण के संओओ जादो । अहअ दाणि कासिराअपुत्तो जअवम्मा भट्टिणीए सुदस्सणाए सह अमच्चेण भूदिएण आणीदो

राअउळं पविट्ठो । सअं किळ कासिराओ जण्णवावारेण ण आअदो । किंणुखु एदं भविस्सदि । [ अहो अनवस्था कृतान्तस्य, यद् राजदारिका प्रथमं महाराजेन सौवीरराजेन तं विष्णुसेनमुद्दिश्य वृता । अद्याविदितसम्भवेन मानुपलोकदुर्लभाकृतिगुणविशेषेण केनापि संयोगो जातः । अथ चेदानीं काशिराजपुत्रो जयवर्मा नाम भट्टिन्या सुदर्शनया सहामात्येन भूतिकेनानीतः संप्रति राजकुलं प्रविष्टः । स्वयं किल काशिराजो यज्ञव्यापारेण नागतः । किन्नु खल्वेतद् भविष्यति ।]

( ततः प्रविशति वसुमित्रा । )

वसुमित्रा—अहो विसमसीळा संवच्छरिआ णाम अत्तणो णक्खत्तविसेसं एव्व चिन्तअन्ति, कम्मगोरवं ण जाणन्ति । अज्ज पविट्ठो कुमारो, अज्ज एव विवाहो णिउत्तो । ( परिक्रम्य ) किण्णुखु जअदा इअं किं वि चिन्तअन्ती अप्पसण्णा विअ उस्सुआ दीसइ । जअदे ! भट्टिणी भणादि—आअच्छेहि त्ति । [ अहो विषमशीलाः सांवत्सरिका नामात्मनो नक्षत्रविशेषमेव चिन्तयन्ति, कर्मगौरवं न जानन्ति । अद्य प्रविष्टः कुमारोऽद्यैव विवाहो नियुक्तः । किंनुखलु जयदेयं किमपि चिन्तयन्त्यप्रसन्नेवोत्सुका दृश्यते । जयद ! भट्टिनी भणति —आगच्छेति । ]

धात्री—हळा ! जाणासि किं णिमित्तं त्ति । [ हला ! जानासि किं निमित्तमिति । ]

वसुमित्रा—किं अण्णं, एदास्सिं कय्ये कत्तव्वं चिन्तेदुं । [ किमन्यत्, एतस्मिन् कार्ये कर्तव्यं चिन्तयितुम् । ]

धात्री—सम्पदि भट्टिणीए को अभिप्पाओ । [ संप्रति भट्टिन्याः कोऽभिप्रायः । ]

वसुमित्रा—अत्तणो वंसजादस्स विह्नुसेणस्स अवत्थं अजाणिअ णेच्छदि जअवम्मणो दारिअं दादुं । किन्तु महाराओ सोवीररा-

अउत्तं अजाणन्तो अज्ज किळ अहिअसन्दावो जादो । [ अ वंशजातस्य विष्णुसेनस्यावस्थामज्ञात्वा नेच्छति जयवर्मणे दातुम् । किन्तु महाराजः सौवीरराजपुत्रमजानन्नद्य किलाधिक जातः । ]

(प्रविश्य)

नलिनिका—अज्ज किदसङ्केदा विअ अम्हाअं सव्वस (परिक्रम्यावलोक्य) किण्णुहु एसा मम मादा वसुमित्ताए किं वि चिन्तेदि । इमं उपसप्पिअ असुहवुत्तन्तं सुण [ अद्य कृतसंकेतानीवास्माकं सर्वसंकटानि । किंनुखल्वेषा मम वसुमित्रया सह किमपि चिन्तयति । इमामुपसर्प्यासुखवृत्तान्तं शृ

वसुमित्रा—हळा णळिणिए ! एहि दाव । तुमं कञ्चुइसह राअउळवुत्तन्तं जाणासि । [ हला नलिनिके ! एहि तावत् कञ्चुकिसहवासेन राजकुलवृत्तान्तं जानासि । ]

नलिनिका—अभिणवो वुत्तन्तो । णं तं णिवेदिउं आअद [ अभिनवो वृत्तान्तः । ननु तं निवेदयितुमागतास्मि । ]

वसुमित्रा—भणाहि जादे ! । [ भण जाते ! । ]

नलिनिका—पेसिदो खु सोवीरराअस्स अमच्चेहि दूदो—अ सामी तुम्हाणं णअरे सपुत्तदारकळत्तो पच्छण्णो पडिवस अम्हाअं गूढपुरुसेहि वुत्तन्तो जाणिअदु सामिणेत्ति । [ खलु सौवीरराजस्यामात्यैर्दूतः—अस्माकं स्वामी युष्माकं नगरे दारकलत्रः प्रच्छन्नः प्रतिवसतीत्यस्माकं गूढपुरुषैर्वृत्तान्तो स्वामिनेति । ]

उभे—कहं पच्छण्णवेसो वत्तदित्ति । तदो तदो । [ कथं वेषो वर्तत इति । ततस्ततः । ]

नलिनिका–तदो एदं सव्वं सुणिअ तस्स लेहस्स अवसाणं
७ पेक्खिअ अय्यभूदिएण सह गओ किल महाराओ तं अण्णेसिदुं।
[ तत एतत् सर्वं श्रुत्वा तस्य लेखस्यावसानं प्रेक्ष्यार्यभूतिकेन सह
गतः किल महाराजस्तमन्वेषितुम् । ]
१० धात्री–किण्णुखु भवे । [ किन्नुखलु भवेत् । ]
वसुमित्रा–णळिणिए ! । तुवं दाव अब्भन्तरं पविस । [ नलि-
निके ! त्वं तावदभ्यन्तरं प्रविश । ]
१३ नलिनिका–जं अय्या भणादि । ( निष्क्रान्ता ) [ यदार्या भणति । ]
वसुमित्रा–एहि दाव । वअं भट्टिणीं पेक्खामो । [ एहि तावत् ।
आंवा भट्टिनीं पश्यावः । ]
१६ धात्री–एवं करेम्ह । [ एवं कुर्वः । ]

( निष्क्रान्ते । )

प्रवेशकः ।

१९ ( ततः प्रविशति कुन्तिभोजः सौवीरराजभूतिकाभ्याम् )

कुन्तिभोजः–वयस्य !

किं प्रेक्षसे मम मुखं चिरकालदृष्टो
गाढं परिष्वज सखे ! स्मर बालभावम् ।
प्रीत्या भवन्तमनिमेषमवेक्षितुं मे
स्नेहान्नवीकृत इवाद्य वयस्यभावः ॥ १ ॥

सौवीरराजः–यदिष्टं भवतः ।

( उभौ परिष्वजेते )

२२ कुन्तिभोजः–

चिन्ताकुलत्वं व्रजतीव बुद्धि-
र्वाक्यं च बाष्पाहतगद्गदं च ।

नेत्रे सबाष्पे मुखमप्रसन्नं
किं हर्षकाले क्रियते विकारः ॥ २ ॥

सौवीरराजः—न खल्वहमप्रहृष्टो भवत्सङ्गमेन। किन्तु बलवान् स्नेहो नाम।

यो मे पुत्रगतः शोको हृदयस्थो विजृम्भते।
सोऽद्य लब्ध्वा सहायं त्वां बाष्परूपेण निर्गतः

कुन्तिभोजः—कथं पुत्रगतः शोक इति।

भूतिकः—विदितमस्तु स्वामिना। न दृश्यते किलास्मिन् सं कुमारः।

सौवीरराजः—बलवान् पुत्रस्नेहो नाम। पश्यतु भवान्

अनुपमबलवीर्यरूपवन्तं
सुतमविमारकमद्य चिन्तयामि।
तव चरणरजोञ्चिताग्रकेशो
यदि स भवेदिह को नु मद्विशिष्टः ॥ ४ ॥

भूतिकः—( आत्मगतम् ) महान् खल्वयं सन्तापो वर्धत ए कुमारमन्तरेण। विलोपयाम्येनम्। ( प्रकाशम् ) कथं स्वामिनो गता व्यापत्।

कुन्तिभोजः—अहमप्यनेन व्याक्षेपेण विस्मृतवानेतत् प्रष्टुम्।

सौवीरराजः—श्रूयताम्। अथवा भूतिकस्तु विजानाति। अय खाच्छ्रोतुमिच्छति।

कुन्तिभोजः—वयमवहिताः स्मः।

सौवीरराजः—अपि ज्ञायते चण्डभार्गवो नामात्यन्तरोषी ब्रह्म

कुन्तिभोजः—श्रूयते तत्रभवांस्तपोनिधिः।

सौवीरराजः—सोऽस्मद्विषयमभ्यागतः । कान्तारे तस्य शिष्यो व्याघ्रेणाभिभूय मारितः ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—ततोऽहमपि तस्मिन् काले मृगयावशाद् यदृच्छयैव तं देशमभ्युपगतः ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—अथ मां दृष्ट्वा विजृम्भमाणरोषभ्रुकुटीपुटविषमीकृतवदनः प्रलम्बजटाभारः शिष्ये स न्यस्तकरः क्रुद्धो दहन्निव क्रोधाग्निना मद्वचनमश्रोतुकामः संरम्भस्खलितवचनो मां बहुधा क्षेप्तुमारब्धः ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—ततोऽहमपि भवितव्यस्यार्थस्य प्राबल्येनाधृतिः 'वृत्तान्तं न ब्रवीषि, निष्कारणं क्षिपसि ' इति संक्रुद्धवानस्मि ।

न भाषसे वृत्तमुपैषि रोषं
निष्कारणं प्रक्षिपसि प्रकामम् ।
अभाजनं त्वं तपसां प्रकोपाद्
ब्रह्मर्षिरूपेण भवाञ्छ्वपाकः ॥ ५ ॥

कुन्तिभोजः—असदृशमुक्तं भवता ।

सौवीरराजः—ततस्तच्छ्रुत्वैवाज्यधारावसिक्तो भगवान् हुताशन इव प्रज्वलितनेत्रो बहुशः शिरः कम्पयन् ' कथं कथम् ' इत्युक्त्वा मां शप्तुमारब्धवान् ।

यस्माद् ब्रह्मर्षिमुख्योऽहं श्वपाक इति भाषितः ।
तस्मात् सपुत्रदारस्त्वं श्वपाकत्वमवाप्स्यसि ॥ ६ ॥

इति ।

कुन्तिभोजः—अहो अल्पमूलत्वं महतां चानर्थस्य ।

भूतिकः—सभाग्यं सौवीरराजकुलम् । कुतः,

ब्रह्मर्षिणा प्ररुष्टेन श्वपाकत्वं तदा कृतम् ।
यस्मात् तेनैव रूपेण न सर्वं भस्मसात् कृतम् ॥ ७ ॥

कुन्तिभोजः—युक्तमभिहितं भवता । ततस्ततः ।

सौवीरराजः—ततस्तच्छापप्रक्षुब्धमनसा मया सुचिरमनुनीतः शनैः शनैः प्रकृतिस्थो भूत्वानुग्रहं कृतवान्—

यावत् प्रच्छन्नरूपेण तावत् संवत्सरं व्रजेः ।
ततः संवत्सरे पूर्णे मुक्तशापो भविष्यसि ॥ ८ ॥

इति । एवमुक्त्वा प्रसन्नचित्तेन एहि भोः काश्यप! इत्याह स तमनुगतो व्याघ्रेण मारितो बटुः । चरितं च मया संव श्वपाकव्रतम् । अद्यास्मि शापान्मुक्तः ।

कुन्तिभोजः—अहो व्यापदः प्रवृत्तिर्निवृतिश्च । दिष्ट्या वर्धते ।

भूतिकः—जयतु स्वामी ।

कुन्तिभोजः—ननु विष्णुसेनमाता सपरिवारमन्तःपुरं प्रविष्टा ।

भूतिकः—तत्रभवती प्रविश्याभ्यन्तरं चिरकालप्रसुप्तं प्रणा धयति ।

कुन्तिभोजः—अथेदानीं विष्णुसेनः कथमविमारको जातः ।

भूतिकः—शृणोतु स्वामी—अस्ति धूमकेतुर्नामासुरः । लोकमारणाय परिभ्रमन् स कदाचित् सौवीरराष्ट्रमुत्सा प्रवृत्तः ।

कुन्तिभोजः—अपूर्वा खलु कथा । ततस्ततः ।

भूतिकः—ततः स्वदेशे सर्वप्रजानामार्तिं दृष्ट्वा तस्य राक्षसस्य च प्रतिक्रियामनवेक्षमाणः स्वामी क्लेशमुपगतः ।

कुन्तिभोजः—ततस्ततः ।

भूतिकः—ततस्तत् सर्वं बुद्ध्वा कुमारो विष्णुसेनः क्षितिरेणुपरुषगात्रः प्रलम्बमानकाकपक्षः शिशुभिस्तुल्यवयोभिः प्रक्रीडमानो दैवयोगात् प्रमत्तेषु रक्षिपुरुषेषु सहसैव तं देशमभ्युपगतो यत्रासौ राक्षसः ।

कुन्तिभोजः—अहो आश्चर्यमाश्चर्यम् । ततस्ततः ।

भूतिकः—ततः स राक्षसः प्रीत्या सुसम्पन्नमिवाहारं कुमारमभिसमीक्ष्य स्वकर्म कर्तुमारब्धः ।

कुन्तिभोजः—अहो नृशंसता राक्षसस्य । ततस्ततः ।

भूतिकः—अथ कुमारेण किञ्चित् प्रहस्य,

> प्रपतदशनिना यथा गिरीन्द्रो
> 　　दवदहनेन यथा वनप्रदेशः ।
> युधि ललितमनायुधेन तेन
> 　　क्षितिपसुतेन तदा हतः स नीचः ॥ ९ ॥

कुन्तिभोजः—प्रथममेव हस्तिसम्भ्रमे मयोक्तं—दैवादुत्पादितोऽयं केवलो मानुषो न भवतीति ।

सौवीरराजः—भवान् सहस्रनेत्रश्चारैः कथं चिन्तयत्यविमारकं प्रति ।

भूतिकः—स्वामिन् !

> गम्यास्तु देशाः सुपरीक्षिता मे
> 　　न दृश्यते क्वापि चरैः कुमारः ।

परीक्षितुं तं मनसोऽस्ति शक्ति-
नूनं हि मायामनुगच्छतीति ॥ १० ॥

(ततः प्रविशति नारदः)

नारदः–

वेदैः पितामहमहं परितोषयामि
गीतैः करोमि हरिमुद्गतरोमहर्षम् ।
उत्पादयाम्यहरहर्विविधैरुपायै-
स्तन्त्रीषु च स्वरगणान् कलहांश्च लोके ॥ ११ ॥

भोः ! कुन्तिभोजस्य पित्रा दुर्योधनेन वयं सुचिरमारा तस्मिन् मानुषस्वभावमुपगते कुन्तिभोजश्चास्मासु भृत्य रति । अद्य कुन्तिभोजस्य सौवीरराजस्य च महानविमार नेन कार्यसङ्कटो वर्तते । तदिदानीमहमविमारकप्रदर्शन र्याक्षेपं समाक्षिपामीत्यवतीर्णोऽस्मि भूम्याम् । (इति कुन्ति वीरराजयोः पुरतः स्थितः । )

कुन्तिभोजः–अये भगवान् देवर्षिर्नारदः । भगवन् ! अभिवा

नारदः–स्वस्ति भवते ।

कुन्तिभोजः–अनुगृहीतोऽस्मि ।

सौवीरराजः–भगवन् ! अभिवादये ।

नारदः–शान्तिरस्तु ते ।

सौवीरराजः–अनुगृहीतोऽस्मि ।

कुन्तिभोजः–(कर्णे) भूतिक ! एवं क्रियताम् ।

भूतिकः–यदाज्ञापयति स्वामी । ( निष्क्रम्य प्रविश्य ) पाद्यं च ।

कुन्तिभोजः–भगवन् ! क्रियतामनुग्रहः ।

नारदः–एवमस्तु ।

कुन्तिभोजः—( अभ्यर्च्य ) भगवन्! अस्मद्गृहं परिपूतं भवदवतरणेन।

सौवीरराजः—इदानीं मुक्तशापोऽस्मि देवर्षिदर्शनेन।

नारदः—नाहं साम्प्रतं युष्मद्दर्शनार्थमेवागतोऽत्र। अविमारकादर्शनेन सम्भूतं दुःखं भवतोर्ज्ञात्वावतीर्णोऽस्मि।

उभौ—यद्येवं, विमुक्तसन्तापौ स्वः।

नारदः—भूतिक! सुदर्शनामानय।

भूतिकः—यदाज्ञापयति भगवान्। (निष्क्रम्य सुदर्शनया सार्धं प्रविष्टः)

सुदर्शना—अब्भाअदो देवरिसी। [ अभ्यागतो देवर्षिः ]।

भूतिकः—एवम्।

सुदर्शना—सणाहो दाणि मे पुत्तअस्स विवाहो संवुत्तो। (उपगम्य) भअवं वन्दामि। [ सनाथ इदानीं मे पुत्रकस्य विवाहः संवृत्तः। भगवन्! वन्दे। ]

नारदः—

एवमेव महाभागे! नित्यं प्रीतिमवाप्नुहि।
कुन्तिभोजश्च भूपालो नित्यं स्यात् प्रीतिरीडितः ॥ १२ ॥

सुदर्शना—अणुग्गहीदम्हि। [ अनुगृहीतास्मि। ]

नारदः—इदानीं पृच्छतां भवन्तौ प्रष्टव्यम्।

उभौ—अनुगृहीतौ स्वः।

कुन्तिभोजः—भगवन्! किं जीवति सौवीरराजपुत्रः।

नारदः—बाढम्।

सौवीरराजः—केन कारणेन न दृश्यते।

नारदः—विवाहव्याक्षेपात्।

सौवीरराजः—कथं निर्विष्टः कुमारः।

कुन्तिभोजः—अथ कस्मिन् प्रदेशे।

नारदः—नगरे वैरन्त्ये ।

कुन्तिभोजः—वैरन्त्यं नाम नगरमप्यस्तीति । भवतु कस्य जाम मुपगतः ।

नारदः—कुन्तिभोजस्य ।

कुन्तिभोजः—कः सः ।

नारदः—

पिता कुरङ्गया भूपालो वैरन्त्यनगरेश्वरः ।
दुर्योधनस्य तनयः कुन्तिभोजो भवान् ननु ॥ १३ ॥

कुन्तिभोजः—किं बहुभिः प्रश्नैः । मत्सुतायां कुरङ्गयां ... इत्युच्यते भगवता ।

नारदः—एवमेतत् ।

कुन्तिभोजः—लज्जित इवास्मि । केन दत्ता, कथं वा, कथं प्रविष्टः कन्यापुरम् ।

नारदः—

दत्ता सा विधिना पूर्वं दृष्टा सा गजसम्भ्रमे ।
पूर्वं पौरुषमाश्रित्य प्रविष्टो मायया पुनः ॥ १४ ॥

कुन्तिभोजः—भवत्वेवं तावन्निष्प्रतिवचनमृषिवचनम् । ... इदानीं किं प्राप्तकालं कुमारस्य कुरङ्गयाश्च । विवाहः पूर्वमा...

नारदः—निष्ठितो विवाहो ननु गान्धर्वः स्वसमय एव इ...

कुन्तिभोजः—अग्निसाक्षिकमिच्छामि ।

नारदः—नित्यमग्निसाक्ष्येव । तथापि स्वजनपरितोषणार्थम... समयमात्रमुपाध्यायेन कारयित्वा शीघ्रमानीयतामिह कुमा... भार्यया ।

कुन्तिभोजः—भगवन् ! एष गच्छामि ।

नारदः– तिष्ठतु भवान् । भूतिक ! गच्छ त्वम् ।

भूतिकः–यदाज्ञापयति भगवान् । ( निष्क्रान्तः । )

कुन्तिभोजः–भगवन् ! विज्ञाप्यमस्ति ।

नारदः–इतस्तावत् । स्वैरमभिधीयताम् ।

कुन्तिभोजः–भगवन् ! सुदर्शनायाः पुत्राय जयवर्मणे कुरङ्गीं दास्यामीति मयानीता सा पूर्वं सनाथा । किं कर्तव्यमिदानीम्, अभिधीयताम् ।

नारदः–एवं करोमि । मुहूर्तमेकान्ते तिष्ठ ।

कुन्तिभोजः–तथास्तु । ( तथा करोति । )

नारदः–सुदर्शने ! इतस्तावत् ।

सुदर्शना–भअवं ! इअम्हि । [ भगवन् । इयमस्मि । ]

नारदः–ननु श्रुतमस्मद्वचनम् ।

सुदर्शना–सुदं सोवीरराअउत्तस्स गुणसङ्कीत्तणं । [ श्रुतं सौवीरराजपुत्रस्य गुणसङ्कीर्तनम् । ]

नारदः–मा मैवम् । भवत्या विस्मृतोऽग्निदेवादुत्पन्नोऽग्रजस्ते पुत्रः ।

सुदर्शना–हं, एदं पि भअवं जाणादि । [ हम्, एतदपि भगवान् जानाति । ]

नारदः–ममैवाज्ञां कुरुष्व तावत् ।

सुदर्शना–एवं करोमि । भअवं भणादु । [ एवं करोमि । भगवान् भणतु ]

नारदः–तवायं पुत्रोऽग्नेरुत्पन्नः । त्वद्भगिन्याः सुचेतनायाः प्रसवसमकाल एव तत्सुतः स्वर्गं गतः । तवायं पुत्रस्त्वद्भगिन्यै त्वया दत्तः । सौवीरराजश्चासावत्यन्तसन्तुष्टः प्रीतिसदृशीः क्रियाः कृत्वा विष्णुसेन इति संज्ञामकरोत् । अमानुषस्वरूपबलवीर्यपराक्रमेणानेन वर्धमानेन यस्मादविरूपधारी मा-

रितोऽसुरः, तस्मादविमारक इति विष्णुसेनं लोको ततः सोऽपि ब्रह्मशापपरिभ्रष्टो हस्तिसम्भ्रमदिवसे कुरङ्गी समुत्पन्नाभिलाषः[1] परेण पौरुषेण सङ्गम्य कुरङ्गया ङ्कितैः कन्यापुररक्षिभिः परीक्ष्यमाणोऽग्निना भगवता प्र निर्गतः। तेन निर्वेदेनाग्निं प्रविष्टः पित्रा भगवताग्निना परिष्वज्यमानो न दहत्यग्निरिति मरुत्प्रपातार्थं कञ्चित् पर्वत

सुदर्शना–अहो अच्चाहिदं। [ अहो अत्याहितम्। ]

नारदः–तत्र केनापि विद्याधरेण तद्रूपदर्शनमात्रप्रहृष्टेन धानकार्यमात्रमङ्गुलीयकं दत्तं, यद् दक्षिणाङ्गुल्या धार भवति, वामेन प्रकृतिस्थश्च।

सुदर्शना–अच्छरीअं अच्छरीअं। [ आश्चर्यमाश्चर्यम्। ]

नारदः–ततस्तद् दक्षिणाङ्गुल्या धारयन् सन्तुष्टनामधेयेन सह कुन्तिभोजस्य कन्यापुरं स्वगृहवत् प्रविश्य कुरङ्गया भिरममाणः सुखमास्ते। एष वृत्तान्तः। किमिदानीं कर्तव्य

सुदर्शना–अणन्तरं अय्याए वञ्चिदाए चळदी विअ मे कोदूहळेण तुस्सदि। भअवं! एसु दिअसेसु कुरङ्गी ज भय्यात्ति पुच्छदि। अज्जप्पहुदि तस्स वन्दणीआ संवुत्ता। न्तरमार्यया वञ्चितया चलतीव मे हृदयं, कौतूहलेन तुष्यति। एषु दिवसेषु कुरङ्गी जयवर्मणो भार्येति पृच्छ्यते। अद्यप्र वन्दनीय संवृत्ता। ]

नारदः–अभिजनयुक्तमेवाभिहितं भवत्या। कथमिदानीं कनीयसे दीयते। सुदर्शने! अभिधीयतां काशिराजाय कुरङ्गी वयसाधिकेति। नन्वस्ति कुरङ्ग्याः कनीयसी नाम। सा जयवर्मणो भार्या भविष्यति।

१ समुत्थमदनाभिलाषः।

सुदर्शना—पडिग्गहिदं इसिवअणं । [ प्रतिगृहीतमृषिवचनम् । ]

नारदः—गच्छ कुन्तिभोजमनुवर्तस्व ।

सुदर्शना—जं भअवं आणवेदि । [ यद् भगवानाज्ञापयति । ]

( ततः प्रविशति वरवेषेणाविमारकः कुरङ्गी भूतिकश्च )

अविमारकः—भोः ! लज्जित इवास्म्यनेन वृत्तान्तेन ।

दृष्ट्वा तदानीं गजसम्भ्रमे मां
मद्विक्रमं ये परिकीर्तयन्ति ।
ते किन्नु वृत्तान्तमिमं विदित्वा
चारित्रदोषं मयि पातयन्ति ॥ १५ ॥

( परिक्रम्य दृष्ट्वा ) अये अयं खलु भगवान् नारदः । य एषः,

शापे प्रसादेषु च सक्तबुद्धि-
र्वेदेषु गीतेषु च रक्तकण्ठः ।
स्निग्धेषु वैराण्युपपाद्य यत्ना-
न्नष्टानि कार्याणि शमीकरोति ॥ १६ ॥

कुन्तिभोजः—इत इतः कुमारः । अभिवादयस्वात्मकुलदैवतं देवर्षिम् ।

अविमारकः—भगवन् ! अभिवादये ।

नारदः—स्वस्ति भवते सपत्नीकाय ।

अविमारकः—अनुगृहीतोऽस्मि । मातुल ! अभिवादये ।

कुन्तिभोजः—एह्येहि वत्स !

क्षमया जय विप्रेन्द्रान् दयया जय संश्रितान् ।
तत्त्वबुद्ध्या जयात्मानं तेजसा जय पार्थिवान् ॥ १७ ॥

अविमारकः—अनुगृहीतोऽस्मि ।

कुन्तिभोजः—वत्स ! इत इतः पितरमभिवादयस्व ।

अविमारकः—भोस्तात ! अभिवादये ।

सौवीरराजः—एह्येहि वत्स !

विरचितवरवेषदर्शनीयो
गुरुजनवन्दनमिश्रशुभ्रवक्त्रः ।
वयमिव भव हर्षबाष्पनेत्र-
स्त्वमिह भवत्तनयं समीक्षमाणः ॥ १८ ॥

पुत्र ! अभिवादयस्व मातुलम् ।

अविमारकः—मातुल ! अभिवादये ।

कुन्तिभोजः—एह्येहि वत्स !

यज्ञैः शुभैर्हरिसमो भव नित्ययुक्तैः
सत्यैर्दृढैर्दशरथप्रतिमो भव त्वम् ।
नित्यार्पितैः पितृसमो भव सम्प्रदानैः
स्वेनात्मना सुसदृशेन पराक्रमेण ॥ १९ ॥

सौवीरराजः—पुत्र ! सुदर्शनामभिवादयस्व ।

कुन्तिभोजः—अयुक्तमिव सुचेतनामनभिवाद्य सुदर्शनामभिवा[दयितुम्]

नारदः—अस्ति कारणम् । अभिवाद्यतां सुदर्शना ।

उभौ—एवं क्रियताम् ।

अविमारकः—भवति ! अभिवादये ।

सुदर्शना—पुत्र! चिरं जीव एदाए सह। (परिष्वज्य) दिट्ठो सि। अज्ज मए अणुभूदो पुत्तसम्पत्तिरसो। [चिरं जीवैतया सह। चिरेण दृष्टोऽसि। अद्य मयानुभूतः संपत्तिरसः। ] (रोदिति)

कुन्तिभोजः—

इमां तु बाष्पार्द्रकुतूहलाक्षीं
सम्प्रस्रवद्दुग्धपयोदयुग्माम् ।

१. इत्येपिते (?)

अवेक्षितां मातरमप्रकाश्य
धात्रीत्वमेवैति सुचेतना मे ॥ २० ॥

नारदः—अलमतिस्नेहेन । प्रविशतु कन्यापुरं सुचेतना सुचेतना सुदर्शना सुदर्शना च सभार्येण पुत्रेण ।

कुन्तिभोजः—यदाज्ञापयति भगवान् ।

सुदर्शना—जं भअवं आणवेदि । [ यद् भगवानाज्ञापयति । ]

नारदः—अचिरेण सौवीरराजो विसृज्यतां स्वदेशगमनाय । जयवर्मणे सुमित्रा प्रदीयतां काशिराज्ञे । त्वमपि सन्निहितो भव ।

कुन्तिभोजः—अनुगृहीतोऽस्मि ।

नारदः—कुन्तिभोज ! किमन्यत् ते प्रियमुपहरामि ।

कुन्तिभोजः—भगवान् यदि मे प्रसन्नः, किमतः परमहमिच्छामि ।

गोब्राह्मणानां हितमस्तु नित्यं
सर्वप्रजानां सुखमस्तु लोके ।

नारदः—सौवीरराज ! किं ते भूयः प्रियमुपहरामि ।

सौवीरराजः—यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

इमामुदीर्णार्णवनीलवस्त्रां
नरेश्वरो नः पृथिवीं प्रशास्तु ॥ २१ ॥

( भरतवाक्यम् )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २२ ॥

( निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः ।

---

# श्लोकानुक्रमणी।

# चारुदत्तस्य कथावस्तु ।

चारुदत्तो नाम कश्चित् सार्थवाहपुत्रो विप्र उदाराशयोऽर्थिषु गलितविभव-सर्वस्व उज्जयिन्यां श्रेष्ठिचत्वरे निवसति स्म। तस्मिन् दृढमनुरक्ता वसन्तसेना नाम गणिका। अथ कदाचिद्राजवीथ्यां गच्छन्ती सा विटद्वितीयेन राजश्यालेन शकारेणानुगम्यमाना संभ्रान्ता प्रदोषान्धकारपूरितगम्भीरायां रथ्यायां दैवाच्चारुदत्तस्य भवन प्राप्ता तस्माद् गृहाद् दीपं गृहीत्वा निष्क्रामन्तीं चारुदत्तचेटीं रदनिकां दृष्ट्वा पटान्तेन दीपं निर्वाप्याभ्यन्तरं प्रविष्टा। अथ विटेन प्रोत्साहितो राजश्यालो वसन्तसेनाबुद्ध्या रदनिकां यावद् बलादाक्रष्टुमारभते स्म तावच्चारुदत्तवयस्यो मैत्रेयो दीपं गृहीत्वा तत्र प्राप्तः। स च तेन प्रधर्षितां चेटीं दृष्ट्वा भृशमेनं निर्भर्त्सयामास। अथ शकारो भवनगता वसन्तसेना त्वया श्वो निर्यातयितव्या इति चारुदत्तं संदिश्य निष्क्रान्तः। वसन्तसेना परिचारिकाभ्रान्त्या चारुदत्तेनाभ्यन्तरप्रवेशनायार्पितं सुमनोवासितं प्रावारकं गृहीत्वा विवर्धितमदना संवृत्ता। अनुपदमेव विदूषकरदनिकाप्रवेशाच्चारुदत्तः स्वं प्रमादं ज्ञातवान्। वसन्तसेनाप्यभयमेनं ययाचे। तस्य हस्ते च स्वीयान् सुवर्णालंकारान् निक्षिप्यार्यमैत्रेयेणानुगता स्वभवनं प्रतिनिववृते।

ततोऽन्येद्युश्चारुदत्तसंवाहको द्यूतोपजीवी द्यूतकरभयाद् वसन्तसेनाभवनं प्रविष्टः शरणागतस्तयाभयदानेन विश्वसितश्चारुदत्तगुणान् प्रशशंस। अनन्तरं तस्याश्चेटः कर्णपूर आत्मनः परिस्पन्दं वर्णयितुमारब्धः। अनेन हि मोचितः सोऽपि वराकः प्रव्राजको हस्तिहस्तसंमर्दात्। ततोऽस्य पराक्रमेण तुष्टश्चारुदत्तस्तमात्मनः प्रावारकं दत्तवान्। ततोऽस्य गुणानुरागित्वमौदार्यं च चिन्तयन्ती वसन्तसेना दृढमुत्कण्ठिताभूत्।

अथ कदाचिद्वसन्तसेनाचेट्या मदनिकायाः कामुकः सज्जलको नाम तामभुजिष्यां कर्तुं प्रवृत्तस्तस्या निष्क्रयार्थं रात्रौ चारुदत्तगृहे सन्धिं कृत्वा वसन्तसेनया निक्षिप्तं सुवर्णभाण्डमपजहार। तच्च गृहीत्वा वसन्तसेनागृहं प्राप्तो मदनिकायै साहसं स्वीयं निवेदयामास। भित्त्यन्तरितया वसन्तसेनयाऽपि श्रुतं तद्रहस्यम्। अत्रान्तरे चारुदत्तसकाशात्प्राप्तो विदूषकः "सुवर्णभाण्डं तद् द्यूते

हारितं " इत्यपदिश्य तन्मूल्यत्वेन चारुदत्तपत्न्या समर्पितां रत्नावलीं प्रादात्। सज्जलकोऽपि मदनिकावचनानुरोधेन 'आर्यचारुदत्तप्रेषित' इति वदंस्तस्या आर्पयत्। तया तु साहसं कृत्वानीतमिदं सुवर्णभा... प्रत्याख्यातः। अन्ते तु प्रेम्णो विजृम्भितमेतदिति प्रीता मदनिकां स... रणैरलंकृत्य सज्जलकाय प्रदाय प्रवहणे तावारोप्य व्यसर्जयत्। स्वयं च... दत्तमभिसर्तुमुद्यताऽभवत्।

## पात्राणि।

**पुरुषाः—**

नायकः—दरिद्रसार्थवाहपुत्रः चारुदत्तः।

विदूषकः—( मैत्रेयः ) चारुदत्तस्य मित्रम्।

शकारः—राजश्यालः संस्थानकः।

विटः

संवाहकः

चेटः—( मृच्छकटिके कर्णपूरकः ) वसन्तसेनायाः किङ्करः।

सज्जलकः—( मृच्छकटिके शर्विलकः ) मदनिकाकामुकः।

**स्त्रियः—**

गणिका—वसन्तसेना।

ब्राह्मणी—चारुदत्तस्य पत्नी।

रदनिका—चारुदत्तगृहे चेटी।

मदनिका—वसन्तसेनायाः सखी चेटी च।

---

### IMPORTANT NOTE

As the Sanskrit text of this edition is thor... revised, and repaginated, readers are requested t... that in referring to the notes, they should add two ... number of the page reference; thus notes on page ... notes should be read as notes for page three of t... and so on.

श्रीगणेशाय नमः ।

भासनाटकचक्रे

# चारुदत्तम्

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः—किण्णुखु अज्ज पच्चूस एव्व गेहादो णिक्खन्तस्स बुभुक्खाए पुक्खरपत्तपडिदजळविन्दू विअ चञ्चळाअन्ति विअ मे अक्खीणि । ( परिक्रम्य ) जाव गेहं गच्छिअ जाणामि किण्णुहु संविधा विहिदा ण वेत्ति । ( परिक्रम्य ) एदं अम्हाणं गेहं । जाव पविसामि । ( प्रविश्यावलोक्य ) जह ळोहीपरिवट्टणकाळसारा भूमी, णेउब्भामणसुगन्धो विअ गन्धो, सुणिमित्तं विअ परिब्भमन्तो वडिवस्सअजणो, किण्णुखु संविधा विहिदा । आदु बुभुक्खाए ओदणमअं विअ जीवळोअं पेक्खामि । जाव अय्यं सद्दावेमि । अय्ये ! इदो दाव । [ किन्नु खल्वद्य प्रत्यूष एव गेहान्निष्क्रान्तस्य बुभुक्षया पुष्करपत्रपतितजलबिन्दू इव चञ्चलायेते इव मेऽक्षिणी । यावद् गेहं गत्वा जानामि किन्नु खलु संविधा विहिता न वेति । एतदस्माकं गेहम् । यावत् प्रविशामि । यथा लौहीपरिवर्तनकालसारा भूमिः, स्नेहोद्भावनसुगन्ध इव गन्धः, सुनिमित्तमिव परिभ्रमन् वरिवस्यकजनः, किन्नु खलु संविधा विहिता । अथवा बुभुक्षयौदनमयमिव जीवलोकं पश्यामि । यावदार्यां शब्दापयामि । आर्ये ! इतस्तावत् । ]

नटी—अय्य ! इअम्हि । अय्य ! दिट्ठिआ खु सि आअदो । [आर्य ! इयमस्मि । आर्य ! दिष्ट्या खल्वस्यागतः । ]

सूत्रधारः—अय्ये ! किं अत्थि अम्हाणं गेहे को वि पादरासो । [ आर्ये ! किमस्त्यस्माकं गेहे कोऽपि प्रातराशः । ]

नटी—अत्थि। [ अस्ति। ]

सूत्रधारः—चिरं जीव। एयं सोभणाणि भोअणाणि दन्तिआ [ चिरं जीव। एवं शोभनानि भोजनानि दात्री भव। ]

नटी—अय्य! तुवं एव पडिवाळन्ती चिट्ठामि। [ आर्य! प्रतिपालयन्ती तिष्ठामि। ]

सूत्रधारः—अय्ये! किं अत्थि अब्भत्थिदं। आर्ये! किमभ्यर्थितम्। ]

नटी—अत्थि। [ अस्ति। ]

सूत्रधारः—एवं देवा तुमं अस्सासअन्तु। अय्ये! किं किं। देवास्त्वामाश्वासयन्तु। आर्ये! किं किम्। ]

नटी—घिदं गुळं दहिं तण्डुळा अ अत्थि। [ घृतं गुडो दधि लाश्चास्ति। ]

सूत्रधारः—एदं सव्वं अम्हाणं गेहे अत्थि। [ एतत् सर्वं गेहेऽस्ति। ]

नटी—णहि णहि। अन्तळावणे। [ नहि नहि। अन्तरापणे। ]

सूत्रधारः—( सरोषम् ) आः अणय्ये! एवं दे आसा अदु। अभावं च गमिस्ससि। अहं चण्डप्पवादळण्डुओ वरण्डी पव्वदादो दूरं आरोविअ पाडिदो म्हि। [ आः अ एवं ते आशा छिद्यताम्। अभावं च गमिष्यसि। अहं चण्ड लण्डित इव वरण्डः पर्वताद् दूरमारोप्य पातितोऽस्मि। ]

नटी—मा भाआहि मा भाआहि। मुहुत्तअं पडिवाळेदु अ सव्वं सज्जं भविस्सदि। ळद्धं णाम एदं। अज्ज मम उववा अय्यो सहायो होदु। [ मा बिभीहि मा बिभीहि। मुहूर्तं पालयत्वार्यः। सर्वं सज्जं भविष्यति। लब्धं नामैतत्। अद्य वासस्यार्यः सहायो भवतु। ]

सूत्रधारः—क्किण्णामहेओ अय्याए उववासो । [किन्नामधेय आर्याया उपवासः । ]

नटी—अभिरूववदी णाम । [ अभिरूपपतिर्नाम । ]

सूत्रधारः–किं अण्णजादीए । [ किमन्यजात्याम् । ]

नटी—आम । [ आम । ]

सूत्रधारः—सव्वं दाव चिट्ठदु । को णु दाणि अय्याए उववासस्स उवदेसिओ । [ सर्वं तावत् तिष्ठतु । कोन्विदानीमार्याया उपवासस्योपदेशिकः । ]

नटी—इमिणा वडिवस्सएण[1] चुण्णगोट्ठेण ! [ अनेन वरिवस्यकेन चूर्णगोष्ठेन । ]

सूत्रधारः—साहु चुण्णगोट्ठ ! साहु । [ साधु चूर्णगोष्ठ ! साधु । ]

नटी—जइ अय्यस्य अणुग्गहो, तदो इच्छेअं अम्हारिसजणजोग्गं कञ्चि बम्हणं निमन्तेदुं । [ यद्यार्यस्यानुग्रहः, तत इच्छेयमस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणं निमन्त्रयितुम् । ]

सूत्रधारः—धम्मिट्ठो खु णिओओ । तेण पादरासो वि मे भविस्सदि । जइ एव्वं, पविसदु अय्या । अहं वि अम्हारिसजणजोग्गं कञ्चि बम्हणं अण्णेसामि । [ धर्मिष्ठः खलु नियोगः । तेन प्रातराशोऽपि मे भविष्यति । यद्येवं प्रविशत्वार्या । अहमप्यस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणमन्वेषे । ]

नटी—जं अय्यो आणवेदि । ( निष्क्रान्तः । ) [यदार्य आज्ञापयति ।]

सूत्रधारः—कहिण्णुखु दरिद्दबम्हणं लभेअं । (विलोक्य) एसो अय्यचारुदत्तस्स वअस्सो अय्यमेत्तेओ णाम बम्हणो इदो एव्व आअच्छदि । जाव उवणिमन्तेमि । (परिक्रम्य) अय्य ! णिमन्तिदो सि । आमन्तणस्स मा दरिद्द त्ति मं अवमण्णेहि । सम्पण्णं अण्हिदव्वं भविस्सदि । घिदं गुळं दहिं तण्डुला अ सव्वं अत्थि । अविअ

१. पडिवेस्सएण.

दक्खिणामासआणि भविस्सन्ति । कुत्रनुखलु दरिद्रब्राह्मणं लभेय । एष आर्यचारुदत्तस्य वयस्य आर्यमैत्रेयो नाम ब्राह्मण इत एवा- गच्छति । यावदुपनिमन्त्रयामि । आर्य ! निमन्त्रितोऽसि । आमन्त्रणस्य मा दरिद्र इति मामवमन्यस्व । सम्पन्नमशितव्यं भविष्यति । घृ गुडो दधि तण्डुलाश्च सर्वमस्ति । अपिच दक्षिणासापका भविष्यन्ति ।

( नेपथ्ये )

अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं । [अन्- मन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् । ]

सूत्रधारः—

घिदगुळदहिसुसमिद्धं धूविअसूवोवदंससम्भिण्णं ।
सक्कारदत्तमिट्ठं भूञ्जीअदु भत्तमय्येण ॥ १ ॥
[ घृतगुडदधिसुसमृद्धं धूपितसूपोपदंशसम्भिन्नम् ।
सत्कारदत्तमिष्टं भुज्यतां भक्तमार्येण ॥ १ ॥ ]

( निष्क्रान्तः । )

## स्थापना ।

---

( ततः प्रविशति विदूषकः । )

विदूषकः—अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं- णं भणामि अहं अरित्तओ त्ति । किं भणासि—सम्पण्णं अम्- अण्हिदव्वं भविस्सदि त्ति । अहं पुण जाणामि । अहिअमहुर- अम्बस्स अजोग्गदाए अट्ठि ण भक्खीअदि त्ति । किं दाणि उळ्ळालिअ उळ्ळालिअ भणासि । भणामि वावुदो त्ति । भणासि—दक्खिणमासआणि भविस्सदि त्ति । एसो वाआ- चक्खिदो हिअएण अणुबन्धीअमाणो गच्छीअदि । अहो

हिदं । अहं वि णाम परस्स आमन्तआणि त्ति तक्केमि । जो अहं तत्तहोदो चारुदत्तस्स गेहे अहोरत्तपय्यत्तसिद्धेहि णाणाविधेहि हिङ्गुविद्धेहि ओग्गारणसुगन्धेहि भूक्खेवमत्तपडिच्छिदेहि अन्तरन्तरपाणीएहि असणप्पआरेहि चित्तअरो विअ बहुमल्लएहि परिवुदो आअण्ठमत्तं अण्हिअ चच्चरवुसहो विअ मोदअखज्जएहि रोमन्थाअमाणो दिवसं खेवेमि, सो एव्व दाणि अहं तत्तहोदो चारुदत्तस्स दरिद्दाए समं पारावदेहि साहारणवुत्तिं उवजीवन्तो अण्णाहिं चरिअ चरिअ तस्स आवासं एव्व गच्छामि । अण्णं च अच्छरिअं । मम उदरं अवत्थाविसेसं जाणादि । अप्पेणावि तुस्सदि । बहुअं वि ओदणभरं भरिस्सदि दीअमाणं । ण आएदि अदीअमाणं, ण पच्चाचिक्खदि । ण खु अहं एरिसेण ण सन्तुट्ठो । ता सट्ठीकिददेवकय्यस्स तत्तहोदो चारुदत्तस्स कारणादो गहीदो सुमणो अन्तालिक्खवासो अ । जाव से पम्सपरिवत्ती होमि । (परिक्रम्यावलोक्य) एसो तत्तभवं चारुदत्तो पभादचन्दो विअ सकरुणप्पिअदंसणो जहाविभवेण गिहदेवदाणि अच्चअन्तो इदो एव्व आअच्छदि । जाव णं उवसप्पामि । (निष्क्रान्तः ।) [ अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् । ननु भणाम्यहमरिक्तक इति । किं भणसि—सम्पन्नमशनमशितव्यं भविष्यतीति । अहं पुनर्जानामि । अधिकमधुरस्य आम्रस्य अयोग्यतया अस्थि न भक्ष्यत इति । किमिदानीं मामुल्लाल्योल्लाल्य भणसि । भणामि व्यापृत इति । किं भणसि—दक्षिणामाषका भविष्यन्तीति । एष वाचा प्रत्याख्यातो हृदयेनानुबध्यमानो गम्यते । अहो अत्याहितम् । अहमपि नाम परस्यामन्त्रणानीति तर्कयामि । योऽहं तत्रभवतश्चारुदत्तस्य गेहेऽहोरात्रपर्याप्तसिद्धैर्नानाविधैर्हिङ्गुविद्धैरुद्गारसुगन्धिभिः भ्रूक्षेपमात्रप्रतीष्टैरन्तरान्तरपानीयैरशनप्रकारैश्चित्रकर इव

बहुमल्लकैः परिवृत आकण्ठमात्रमशित्वा चत्वरवृषभ इव मोदक रोमन्थायमानो दिवसं क्षिपामि, स एवेदानीमहं तत्रभवतश्चारुद दरिद्रतया समं पारावतैः साधारणवृत्तिमुपजीवन् अन्यत्र च चरित्वा तस्यावासमेव गच्छामि। अन्यच्चाश्चर्यम्। ममोदरमवश शेषं जानाति। अल्पेनापि तुष्यति। बहुकमप्योदनभरं भरिष्यति मानम्। न याचते अदीयमानं, न प्रत्याचष्टे। न खल्वहमीदृशेन सन्तुष्टः। तत् षष्ठीकृतदेवकार्यस्य तत्रभवतश्चारुदत्तस्य कारणाद् तानि सुमनसोऽन्तरीयवासश्च। यावदस्य पार्श्वपरिवर्ती भवामि। तत्रभवांश्चारुदत्तः प्रभातचन्द्र इव सकरुणप्रियदर्शनो यथाविभवेन दैवतान्यर्चयन् इत एवागच्छति। यावदेनमुपसर्पामि।]

(ततः प्रविशति बलिमुपहरन्नायको विदूषकश्चाङ्गेरिकाहस्ता चेटी च)

नायकः—(दीर्घं निःश्वस्य) भोः! दारिद्र्यं खलु नाम मनस्विनः पुरुषस्य सोच्छ्वासं मरणम्। कुतः,

यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विभक्तपुष्पः।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः॥ २॥

विदूषकः—अळं दाणि भवं अदिमत्तं सन्तप्पिदुं। पुरुसजोव्व विअ गिहजोव्वणाणि खु दसाविसेसं अणुहोन्ति। आसमुद्द विपण्णविभवस्स बहुळपक्खचन्दस्स जोण्हापरिक्खओ भवदो एव्व रमणीओ अअं दरिद्दभावो। [अलमिदानीं भ तिमात्रं सन्तप्तुम्। पुरुषयौवनानीव गृहयौवनानि खलु दशा मनुवभवन्ति। आसमुद्रदानविपन्नविभवस्य बहुलपक्षचन्द्रस्य ज्यो परिक्षय इव भवत एव रमणीयोऽयं दरिद्रभावः।]

नायकः—न खल्वहं नष्टां श्रियमनुशोचामि । गुणरसज्ञस्य तु
१ पुरुषस्य व्यसनं दारुणतरं मां प्रतिभाति । कुतः,

सुखं हि दुःखान्यनुभूय शोभते
यथान्धकारादिव दीपदर्शनम् ।
सुखात्तु यो याति दशां दरिद्रतां
स्थितः शरीरेण मृतः स जीवति ॥ ३ ॥

विदूषकः—भो वअस्स ! समुद्दपट्टणसारभूदो तादिसो अत्थसञ्चओ कहिं गओ । [ भो वयस्य ! समुद्रपत्तनसारभूतस्तादृशोऽर्थसञ्चयः
३ क्व गतः । ]

नायकः—( निःश्वस्य ) वयस्य ! यत्र गतानि मे भागधेयानि । पश्य,

क्षीणा ममार्थाः प्रणयिक्रियासु
विमानितं नैव परं स्मरामि ।
एतत्तु मे प्रत्ययदत्तमूल्यं
सत्त्वं सखे ! न क्षयमभ्युपैति ॥ ४ ॥

( चिन्तां नाटयति । )

विदूषकः—किं भवं अत्थविभवं चिन्तेदि । [ किं भवानर्थविभवं
३ चिन्तयति । ]

नायकः—

सत्यं न मे धनविनाशगता विचिन्ता
भाग्यक्रमेण हि धनानि पुनर्भवन्ति ।
एतत्तु मां दहति नष्टधनाश्रियो मे
यत् सौहृदानि सुजने शिथिलीभवन्ति ॥ ५ ॥

अपिच,

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सत्त्वं हास्यमुपैति शीलशशिनः कान्तिः परिम्लायते।
निर्वैरा विमुखीभवन्ति सुहृदः स्फीता भवन्त्यापदः
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥ ६।

विदूषकः—एदे दाणि दासीएवुत्ता अत्थवावारा गोवदार
विअ मसअभीदा गिहादो णिग्गच्छन्ति। धणविणासदुक्ख
उण चिन्तिअमाणस्स वसन्ते वुड्डस्स सरत्थम्बस्स विअ अङ्कु
ङ्कुरा उब्भमन्ति। ता अळं भवदो सन्दावेण। [एत इदानीं दा
पुत्रा अर्थव्यापारा गोपदारका इव मशकभीता गृहाद् निर्गच्छन्ति
धनविनाशदुःखस्य पुनश्चिन्त्यमानस्य वसन्ते वृद्धस्य शरस्तम्बस्ये-
वाऽङ्कुराङ्कुरा उद्भ्रमन्ति। तदलं भवतः सन्तापेन. .]

नायकः—वयस्य! किमर्थं सन्तापं करिष्ये। किञ्चाहं दरि
यस्य मम,

विभवानुवशा भार्या समदुःखसुखो भवान्।
सत्त्वं च न परिभ्रष्टं यद् दरिद्रेषु दुर्लभम् ॥ ७॥

(ततः प्रविशति गणिका सम्भ्रान्ता विटेन शकारेण चानुगम्यमाना।

शकारः—चिट्ठ चिट्ठ वशन्तशेणिए! चिट्ठ

किं याशि धावशि पधावशि पक्खळन्ती
शाहु प्पशीद ण मळीअशि चिट्ठ दाव।
कामेण शम्पदि हि जज्झइ मे शळीळं
अङ्गाळमज्झपडिदे विअ चम्मखण्डे ॥ ८॥

[तिष्ठ तिष्ठ वसन्तसेने तिष्ठ,

किं यासि धावसि प्रधावसि प्रस्खलन्ती
साधु प्रसीद न मार्यसे तिष्ठ तावत्।
कामेन सम्प्रति हि दह्यते मे शरीर–
मङ्गारमध्यपतितमिव चर्मखण्डम् ॥ ८ ॥ ]

विटः–वसन्तसेने !

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्तोपदेशविशदौ चरणौ क्षिपन्ती।
उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टि-
र्व्याघ्रानुसारचकिता हरिणीव यासि ॥ ९ ॥

शकारः–भावे ! एशा गच्छइ वशन्तशेणिआ,
दुवेहि अम्हेहि अणुबन्धअन्ती जहा शिगाळी विअ कुक्कुळेहि।
शणूपुळा मेहळणादहाशा शवेट्टणं मे हळअं हळन्ती ॥ १० ॥
[ भाव ! एषा गच्छति वसन्तसेना,
द्वाभ्यामावाभ्यामनुबध्यमाना यथा शृगालीव कुक्कुराभ्याम्।
सनूपुरा मेखलानादहासा सवेष्टनं मे हृदयं हरन्ती ॥ १० ॥ ]

विटः–वसन्तसेने !

किं त्वं पदात् पदशतानि निवेशयन्ती
नागीव यासि पतगेन्द्रभयाभिभूता।
वेगादहं प्रचलितः पवनोपमेयः
किं त्वां ग्रहीतुमथवा न हि मेऽस्ति शक्तिः ॥ ११ ॥

गणिका–( समन्तादवलोक्य ) पळ्ळवअ ! पळ्ळवअ ! परहुदिए !
परहुदिए ! महुअरअ ! महुअरअ ! सारिए ! सारिए ! हद्धि,
३ णट्ठो मे परिजणो। एत्थ सअं एव अप्पा रक्खिदव्वो। [पल्लवक !

पल्लवक ! परभृतिके ! परभृतिके ! मधुकरक ! मधुकरक ! शारि शारिके ! । हा धिक्, नष्टो मे परिजनः । अत्र स्वयमेवा रक्षितव्यः । ]

६ शकारः—विळव विळव णाए ! विळव पळ्ळवं वा, परहुदि वा, महुअरं वा, शाळिअं वा, शव्वं वशन्तमाशं वा । के तुमं परित्तअशि ।

किं वाशुजेवे शवपट्टणेशे
कुन्तीशुदे वा जणमेजए वा ।
अहं तुमं गण्हिअ केशहत्थे
दुःशाशळे शीदमिवाहळामि ।। १२ ।।

[ विलप विलप ज्ञाते ! विलप पल्लवं वा, परभृतिकां वा, मधुकरं वा, शारिकां वा, सर्वं वसन्तमासं वा । कः कस्त्वां परित्रास्यते । किं वासुदेवः शवपत्तनेशः कुन्तीसुतो वा जनमेजयो वा । अहं त्वां गृहीत्वा केशहस्ते दुःशासनः सीतामिवाहरामि ॥ १२ ॥

विटः—वसन्तसेने ! सर्वत्र भयानभिज्ञहृदयं मां कुरु । प

परिचिततिमिरा मे शीलदोषेण रात्रि-
र्बहुलतिमिरकालास्तीर्णपूर्वा विघट्टाः ।
युवतिजनसमक्षं काममेतन्न वाच्यं
विपणिषु हतशेषा रक्षिणः साक्षिणो मे ।। १३ ।।

गणिका—हं इदाणिं संसइदा संवुत्ता, जो अप्पगुणाणि सअं मन्तेदि । कहं एदे अकय्यं ण करिस्सन्दि । [ अहम् इदानीं सं
३ यिता संवृत्ता, य आत्मगुणान् स्वयमेव मन्त्रयते । कथमेतेऽकार्यं करिष्यन्ति । ]

विटः—भवति ! क्रियतामस्माकमनुनयप्रग्रहः । पश्य,

जनयति खलु रोषं प्रश्रयो भिद्यमानः
किमिव च रुषितानां दुष्करं मद्विधानाम्।
अनुनयति समर्थः खड्गदीर्घः करोऽयं
युवतिवधघृणाया मां शरीरं च रक्ष ॥ १४ ॥

गणिका—अणुणओ वि खु से भाएदि। [ अनुनयोऽपि खल्वस्य भाययति। ]

शकारः—वशन्तशेणिए! शुट्ठु भावे भणादि। बहुमण्णिअदि खु दाव बलिअजणदुल्लहे अणुणए। पेक्ख वाशु!

अशि क्खु तिक्खे शिहिग्गीवमेअए
खिवेमि शीशं तव मालए हवा।
अलं तु अम्हालिशकाणि लोशिअ
मडे खु जो होइ ण णाम जीवइ ॥ १५ ॥

[ वसन्तसेने! सुष्ठु भावो भणति। बहुमान्यते खलु तावद् बलवज्जनदुर्लभोऽनुनयः। पश्य वासु!
असिः खलु तीक्ष्णः शिखिग्रीवामेचकः क्षिपामि शीर्षं तव मारयेऽथवा।
अलं त्वस्मादृशकान् रोषयित्वा मृतः खलु यो भवति न नाम जीवति॥ १५ ]

गणिका—अय्य! कुलउत्तजणस्स सीलपरितोसोवजीविणी गणिआ खु अहं। [ आर्य! कुलपुत्रजनस्य शीलपरितोषोपजीविनी गणिका खल्वहम्। ]

विटः—अतः खलु प्रार्थ्यसे।

गणिका—अय्य! इमादो जणादो किं इच्छीअदि सरीरं वा आदु अलङ्कारो वा। [ आर्य! अस्माज्जनात् किमिष्यते शरीरं वाथवालङ्कारो वा। ]

विटः—न पुष्पमोक्षणमर्हति लता। कृतमलङ्कारेण।

गणिका–अहं खु दाणि अत्ताणं ण सन्दावेअं। [अहं खल्वि नीमात्मानं न सन्तापयेयम्।]

शकारः–वशन्तशेणिए! अहं भट्टिपुत्ते कामइदव्वे। [वसन्तसे अहं भर्तृपुत्रः कामयितव्यः।]

गणिका–सन्तो सि। [शान्तोऽसि।]

शकारः–शुणाहि भावे! शुणाहि। एशा वशन्तशेणिआ मं शन्तो शि त्ति भणादि। [श्रृणु भाव! श्रृणु। एषा वसन्तसेना श्रान्तोऽसीति भणति।]

विटः–(आत्मगतम्) आक्रुष्टमात्मानं न जानाति मूर्खः। इत्युक्ते श्रान्त इत्यवगच्छति। अपि च,

अभिनयति वचांसि सर्वगात्रैः
किमपि किमप्यनवेक्षितार्थमाह।
अनुचितगतिरप्रगल्भवाक्यः
पुरुषमयस्य पशोर्नवावतारः ॥ १६ ॥

(प्रकाशम्) वसन्तसेने! किमिदं मत्सन्निधौ वेशवासविरुद्ध भिहितम्। पश्य,

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे! सुप्रियं चाप्रियं च ॥ १७॥

गणिका–एसो मे अभिणिवेसो अभिजणेण तुळीअदि। [ मेऽभिनिवेशोऽभिजनेन तोल्यते।]

शकारः–भावे! एशा अन्धआळपूळिदगम्भीळा ळच्छा दी मा खु णाए एत्थ भंशइदव्वा। आ कामदेवाणुआणप्पहुदि ण

